णक्लन्मूत्रं' इति पठन्ति, क्लेदविवेकजमिति क्लेद आर्द्रत्व स चाहारस्य, तस्य विवेकात् पृथक्त्वाज्जात मूत्रम् । केचित् 'स्वेद. क्लेदयति' इति पठन्ति ॥ ६ ॥

**रक्तलक्षणमार्तवं गर्भकृच्च, गर्भो गर्भलक्षणं, स्तन्यं स्तनयोरापीनत्वजननं जीवनं चेति ॥ ७ ॥**

अत उपधातूना प्राकृतं कर्माह,—रक्तलक्षणमित्यादि । रक्तस्य यानि लक्षणानि तान्यस्य सम्भवन्तीति स्वभावकथनम् । गर्भकृच्चेति प्राकृतकर्मकथनम् । चकाराद्रक्तकर्मापि जीवन करोति । केचिदाचार्या 'रक्तलक्षणमार्तव यथोक्तमकृत्रिम गर्भकृच्च' इति पठन्ति, व्याख्यानयन्ति च—यथोक्तमिति 'शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम्'—इत्याद्युक्तलक्षणं, अकृत्रिममिति वातपित्तकफैरध प्रसृतैरष्टधाऽऽर्तवदूपकैरसृग्दररूपतया वा कृत कृत्रिमं, न कृत्रिममकृत्रिमं शुद्ध, गर्भकृद्भवतीत्यर्थ । गर्भो गर्भलक्षणमिति 'स्तनयो श्यावमुखता' इत्यादिक 'करोति' इत्यध्याहार । स्तन्यमिति आपीनत्वजननं मांसलत्वजननम् । जीवन बालाना, तेषामेव स्त्रीक्षीरसात्म्यत्वात् ॥ ७ ॥

**तत्र विधिवत्परिरक्षणं कुर्वीत ॥ ८ ॥**

प्रकृतिस्थानां रक्षणमाह—तत्रेत्यादि । तत्र तेषु वातादिषु प्रकृतिस्थेषु, विधिवत् विधिनोपपन्न, विधिरत्र स्वास्थ्यवृत्तिक, परिरक्षणं सर्वतो रक्षणम् ॥ ८ ॥

**अत ऊर्ध्वमेषां क्षीणलक्षणं वक्ष्यामः; तत्र, वातक्षये मन्दचेष्टताऽल्पवाक्त्वमप्रहर्षो मूढसंज्ञता च, पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वं(ता) च, श्लेष्मक्षये रूक्षताऽन्तर्दाह आमाशयेतरश्लेष्माशयशून्यता सन्धिशैथिल्यं तृष्णा दौर्बल्यं प्रजागरणं च ॥ ९ ॥**

अत ऊर्ध्वमित्यादि । केचिदत्र "क्षय. पुनरेषामतिसशोधनातिसशमनवेगविधारणासात्म्यान्नमनस्तापव्यायामानशनातिमैथुनैर्भवति"—इति क्षयकारणानि पठन्ति । एतानि प्रायो वायोर्वृद्धिं कुर्वन्ति पित्तकफयोस्तु क्षयमिति, तस्माद्यथासम्भव कारण ज्ञेयं; तस्मान्नास्मिन् पाठे प्रयोजनमित्याचार्या वदन्ति । तत्रेत्यादि । मन्दचेष्टता मन्दकायव्यापारता । अप्रहर्षोऽतुष्टि । मूढसंज्ञता नष्टसम्यग्ज्ञानता । चकारात् प्राकृतकर्मणां [illegible] रोधिनश्च श्लेष्मण· प्राकृतकर्मवृद्धिरिति चकार समुच्चिनोति । एवं पित्तादिक्षयेष्वपि चकारे प्रयोजनं ज्ञेयम् । पित्तक्षय इत्यादि निष्प्रभता प्रभाहानि· । श्लेष्मक्षय इत्यादि आमाशयो यत्राशितादि पच्यते, इतराशया उर कण्ठशिर सन्धय इति; 'श्लेष्माशयशून्यतेति कृते सति आमाशयो लब्ध', तदामाशयस्य पृथगुपादानं तद्विशेषेण शून्यताख्यापनार्थम् । केचिच्छिर·शब्दं सूत्रे पठन्ति, शिरसोऽपि सर्वेन्द्रियाधिष्ठानत्वेन प्राधान्यात् पृथगभिधानम् ॥ ९ ॥

**तत्र स्वयोनिवर्धनान्येव प्रतीकारः ॥ १० ॥**

दोषक्षये चिकित्सामाह,—तत्रेत्यादि । स्वयोनिवर्धनान्येवेति शीतरूक्षादीनि । प्रतीकारश्चिकित्सितम् । न पुन स्वयोनिवर्धनान्यपि कटुकादीनि, कुत भूयस्त्वेनान्यदोषप्रकोपणत्वात् । तथाचोक्तं,—"वातक्षये शीतरूक्षैर्न लव्यं कटुकादिभि । पित्तक्षयेऽपि कटुकैरुष्णैर्न लवणादिभि । क्षीरादिभि· स्निग्धशीतै· प्रतिकुर्यात् कफक्षये"—इति । अन्ये तु व्याख्यानयन्ति—स्वयोनिवर्धनानि स्वयोनिरात्महेतु, तत्र वायोर्वायुरेव हेतु·, पित्तस्याग्निर्हेतु, कफस्य हेतुराप ; वातक्षये वातवर्धनानि, पित्तक्षये पित्तवर्धनानि, कफक्षये कफवर्धनानि । कफस्य योनी रस, पित्तस्य रक्तमित्यपरे; रसरक्तयोरपि वर्धनान्याप्यतैजसद्रव्याणीति स एवार्थः ॥ १० ॥

**रसक्षये हृत्पीडाकम्पशून्यतास्तृष्णा च, शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यं च, मांसक्षये स्फिग्गण्डौष्ठोपस्थोरुवक्षःकक्षापिण्डिकोदरग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यं च, मेदःक्षये प्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च, अस्थिक्षयेऽस्थिशूलं दन्तनखभङ्गो रौक्ष्यं च, मज्जक्षयेऽल्पशुक्रता पर्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च, शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके चाल्परक्तशुक्रदर्शनम् ॥ ११ ॥**

---

१ चक्रस्तु 'यथोक्तरक्तलक्षण, इति पठति व्याख्याति च-'यथोक्तरक्तलक्षणमिति आर्तवरूपरक्तस्य यल्लक्षणमुक्त 'मासि मासि रजद स्रवेत्' इत्यादि, तदेवास्य प्रकृतिस्थस्य लक्षणम्' इति ।

२ 'जीवसञ्ज्ञ' इति पा० ।

३ 'तेषा' इति पा० ।

४ 'स्वास्थ्यप्रवर्तक' इति पा० ।

५ 'आमाशयेतराशयाना शून्यता' इति हाराणचन्द्रसमत पाठ ।

६ 'मन्दचेष्टता सकलप्राकृतवातक्रियाणामल्पता, मूढसज्ञता असम्यग्ज्ञानं, एतच्च प्राकृतवायोरिन्द्रियार्थसम्प्रापकस्य वैगुण्यादुपपन्नम्' इति चक्र ।

१ 'स्वयोनिवर्धनद्रव्याणि' इति पा० । 'स्वयोनीतिवक्तव्ये यद्वर्धनमित्यधिक करोति, तेन स्वयोनिश्च यद्वातादीना कषायादितयाऽम्लकादि प्रतिभाति तन्निरासार्थं, तद्धि स्वयोनिरपि पथ्यत्वप्रभावबाधितत्वान्न वर्धन, तथा प्रभावादपि यत्कफादिवर्धन मत्स्यादि तदपि गृह्यत' इति चक्र ।

२ 'प्लीहाभिवृद्धिरुदरे मेद क्षये वृद्धवातेनोदरशून्यतया च प्लीहा स्थानाद्भ्रष्टो वर्धते' चक्र ।

३ 'अस्थितोदो' इति हाराणचन्द्रसंमत पाठ. ।

४ 'अल्पशुक्ररक्तदर्शन च शुक्रक्षये कुपितेन वायुना हर्षोदीरितेन च रक्तानयनाद्भवति' चक्र ।

इदानीं धातुक्षयं दर्शयति—रसक्षय इत्यादि । हृच्छब्द पीडादिभिः शून्यतान्तैः प्रत्येकं संबध्यते । तृष्णोदकपानाभिलाषः । चकारप्रयोजनं दोषक्षयप्रस्तावे दर्शितम् । अन्ये तु 'रसक्षये हृत्पीडा कम्पः शोषः शून्यता तृष्णा च' इति पठन्ति व्याख्यानयन्ति च—शोषः शरीरस्य, शून्यता आमाशयस्य मनसो वा, शेषं समम् । शोणितक्षय इत्यादि । अम्लशीतप्रार्थनेति शोणितक्षये सति वातवृद्धौ तत्प्रत्यनीकाम्लरसेच्छा, तथा रक्तस्य द्रवत्वात्तत्क्षये तेजोवृद्धौ शीतप्रार्थनाऽपि, केचिदग्नीषोमीयत्वाद्रक्तस्य तत्तुल्यगुणयोरम्लशीतयोः प्रार्थनेति वदन्ति । चकाराद्वह्निमान्द्यादिकं च शोणितवर्णनीयोक्तं बोद्धव्यम् । मांसक्षय इत्यादि । स्फिचौ कटिप्रोथौ, गण्डौ गल्लौ, उपस्थो योनिः, ऊरुर्लोके जङ्घेति व्याख्याता, वक्ष उरः, पिण्डिका जानुगुल्फयोरन्तरं, शुष्कशब्दः स्फिगादिभिः प्रत्येकं संबध्यते । मेदःक्षय इत्यादि । रौक्ष्यं त्वचि । मेदुरमांसप्रार्थनेति मेदुरं स्निग्धतमं, प्रार्थनाऽभिलाषः । अस्थिक्षय इत्यादि । रौक्ष्यं देहस्य दन्तनखानां च, दन्तादीनामस्थिमयत्वाद्ग्रहणम् । मज्जक्षय इत्यादि । पर्वभेदो ग्रन्थिपीडा; अस्थिशून्यता रिक्तता, पूरणाभावात् । शुक्रक्षय इत्यादि । चिराद्वा प्रसेकः कथंचित् प्रवृत्तावपि चिरकालेन क्षरणं, अल्परक्तशुक्रदर्शनं शुक्रं क्षीणं मज्जमिश्रमल्परक्तत्वमृच्छति; अन्ये त्वल्पशुक्ररक्तदर्शनं धातुक्षयात् कुपितो वायुः शोणितमल्पशुक्रमिश्रं विस्रावयतीति, मेढ्रवृषणवेदनेति शुक्रस्य सर्वशरीरव्यापिनोऽपि विशेषाधारत्वान्मेढ्रवृषणनिर्देशः ॥ ११ ॥

**तत्रापि स्वयोनिवर्धनद्रव्योपयोगः प्रतीकारः ॥ १२ ॥**

चिकित्सासूत्रं निर्दिशन्नाह,—तत्रापीत्यादि । स्वयोनिवर्धनमपि समानेन द्रव्येण समानगुणेन समानगुणभूयिष्ठेन वा । समानेन द्रव्येण यथा—रक्तं रक्तेन वर्धते, मांसं मांसेन, मेदो मेदसा, अस्थि तरुणसञ्ज्ञकेनास्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण; समानगुणेन यथा—रक्तक्षये तैजसद्रव्योपयोगः, तेजोगुणभूयिष्ठद्रव्योपयोगो वेत्यादि बोद्धव्यम् । द्रव्यग्रहणमुपलक्षणं, तेन कर्मापि यद्यस्य धातोरभिवृद्धिकरं तत्क्षये तत् सेव्यम् । तत्र स्वयोनिद्रव्याणामवबोधार्थं धातुमलोपधातुषु श्लोकाः कथ्यन्ते,—"यद्यपि पञ्चभूतानां वाच्यः पाको द्विधा पुनः । तथाऽप्यपां प्रधानत्वाद्रसः सौम्योऽभिधीयते ॥ अतिरिक्ता गुणा रक्ते वह्नेर्मांसे तु पार्थिवाः । मेदस्यम्बुभुवोरस्थ्नि पृथिव्यनिलतेजसाम् ॥ मज्ज्ञि शुक्रे च सोमस्य मूत्रेऽम्बुशिखिनोर्गुणाः । भुवो विड्यार्तवे त्वग्नेः प्रस्वेदस्तन्ययोरपाम् । इति धातुमलेषूक्ता गुणाः प्राधान्यतः स्थिताः । प्रायेण भूगुणा गर्भे स्तोका ह्यन्यगुणा अपि—"इति ॥ १२ ॥

१ 'एते च रसक्षये वृद्धवाताद्धि भवन्ति' चक्र ।
२ 'अम्लशीतप्रार्थना सौम्याग्नेयत्वाद्रक्तस्य स्वयोनितया भवति, सिराशैथिल्य पूरकरक्ताल्पतया' चक्र ।
३ 'स्तोकस्तोकाद्यनुग्रह' इति पा० ।

**पुरीषक्षये हृदयपार्श्वपीडा सशब्दस्य च वायोरूर्ध्वगमनं कुक्षौ संचरणं च, मूत्रक्षये बस्तितोदोऽल्पमूत्रता च; अत्रापि स्वयोनिवर्धनद्रव्याणि प्रतीकारः । स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेदनाशश्च; तत्राभ्यङ्गः स्वेदोपयोगश्च ॥ १३ ॥**

मलक्षयं दर्शयन्नाह,—पुरीषक्षय इत्यादि । कुक्षिरत्र जठरम् । अत्र चिकित्सासूत्रं निर्दिशन्नाह,—अत्रापीत्यादि । पुरीषक्षये माषकुल्माषादीनां, मूत्रक्षये इक्षुत्रपुसादीनामुपयोगः । स्वेदक्षय इत्यादि । स्पर्शवैगुण्यं स्पर्शहानिः । चिकित्सामाह,—तत्राभ्यङ्ग इत्यादि । चकारात् स्वेदजननकुक्कुटवराहादिमांसोपयोगश्चाभ्यन्तरो लभ्यते ॥ १३ ॥

**आर्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च; तत्र संशोधनमाग्नेयानां च द्रव्याणां विधिवदुपयोगः । स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासंभवोऽल्पता वा; तत्र श्लेष्मवर्धनद्रव्योपयोगः । गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च; तत्र प्राप्तबस्तिकालायाः क्षीरबस्तिप्रयोगो मेध्यान्नोपयोगश्चेति ॥ १४ ॥**

उपधातुक्षयमाह,—आर्तवक्षय इत्यादि । यथोचितकालो मासि मासि त्र्यहस्रवणम् । चिकित्सामाह,—तत्र संशोधनमित्यादि । संशोधनमिह सामान्यमिति केचित्, संशोधनमिह वमनं न विरेक इत्यपरे, कुतः ? विरेचनेन हि पित्तक्षयादार्तवस्य क्षय एव स्यादिति, वमनेन तु सौम्यधातौ निर्हृते आग्नेयधातौ वृद्धे आर्तवमाप्याय्यते । आग्नेयानां च द्रव्याणामिति तिलमाषसुराशुक्तादीनाम् । स्तन्यक्षय इति म्लानताऽनुन्नतिः । चिकित्सामाह,—तत्र श्लेष्मवर्धनेति स्तन्यस्य रसजत्वात् । गर्भक्षय इत्यादि । अत्र चिकित्सामाह,—तत्रेत्यादि । प्राप्तबस्तिकालाया इति प्राप्ताष्टममासाया इत्यर्थः । मेध्यान्नोपयोग इति स्निग्धान्नोपयोगः; 'मेध्याण्डोपयोग' इत्यन्ये पठन्ति, मेध्याण्डानि वृष्याण्डानि, बस्तमत्स्याण्डादीनीति व्याख्यानयन्ति ॥ १४ ॥

**अत ऊर्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः । वृद्धिः पुनरेषां स्वयोनिवर्धनात्युपसेवनाद्भवति । तत्र, वातवृद्धौ वाक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढवर्चस्त्वं च; पित्तवृद्धौ पीतावभासता संतापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्यं पीतविण्मूत्रनेत्रत्वं च; श्लेष्मवृद्धौ**

१ 'त्वक्पारुष्य' इति पा० ।
२ 'निद्रा मनसो निवृत्त्या भवति, यदुक्तं—'यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः' इति; तत्र वायुना मनोभ्रमणान्निद्रा न भवति, पित्तस्याप्युष्णतया मनोविक्षेपान्निद्रा स्वल्पा भवति, चक्रः ।

शौक्ल्यं शैत्यं स्थैर्यं गौरवमवसादस्तन्द्रा निद्रा सन्ध्यस्थिविश्लेषश्च ॥ १५ ॥

अत ऊर्ध्वमित्यादि । गाढवर्चस्त्व चेति चकारोऽयं वातस्य प्रकृतिकर्मणोऽतिशयत्व समुच्चिनोति, एवं पित्तकफरसादिष्वपि चकारप्रयोजनम् । वाक्पारुष्य वचनकार्कश्य, केचिद्वाक्पारुष्य न पठन्ति । कार्श्य मासक्षयः । कार्ष्ण्य कृष्णत्वं शरीरे । अल्पबलत्वमुत्साहहानि. । पित्तवृद्धावित्यादि । अल्पनिद्रता किञ्चित् स्निग्धत्वात् पित्तस्य । मूर्च्छा सर्वेन्द्रियशक्तेस्तिरस्कार. । बलहानिरिह ओजोहानि, सतापात्तत्क्षयोपपत्ते । श्लेष्मवृद्धावित्यादि । शौक्ल्यशैत्ये त्वगादीनाम् । स्थैर्य गात्राणा स्तम्भ । अवसादश्चित्तदेहयोर्ग्लानि. । तन्द्रा निद्राभेद । सन्धिविश्लेषोऽत्यन्तवृद्धेन विघटनम् । 'सन्ध्यस्थिश्लिष्टता' इति केचित् पठन्ति व्याख्यानयन्ति च,—'कफोपचितत्वात् सुष्ठु सङ्घट्टनं सन्ध्यस्थ्नोर्भवति' इति । 'अध्यस्थिश्लिष्टता' इति क्वचित् पाठ ॥१५॥

रसोऽतिवृद्धो हृदयोत्क्लेदं प्रसेकं चापादयति; रक्तं रक्ताङ्गाक्षितां सिरापूर्णत्वं च. मांसं स्फिग्गण्डौष्ठोपस्थोरुबाहुजङ्घासु वृद्धिं गुरुगात्रतां च, मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यं च, अस्थ्यध्यस्थीन्यधिदन्तांश्च, मज्जा सर्वाङ्गनेत्रगौरवं च; शुक्रं शुक्राश्मरीमतिप्रादुर्भावं च ॥ १६ ॥

धातूनामतिवृद्धिं दर्शयन्नाह,—रसोऽतिवृद्ध इत्यादि । हृदयोत्क्लेद हृल्लास, अन्ये छर्दिमाहु । प्रसेक लालास्रावमित्यर्थ । आपादयतीति क्रियापदं गर्भो जठराभिवृद्धिं स्वेद चेत्यन्तं यावदनुवर्तते । अध्यस्थीन्यधिकास्थीनि । अधिदन्तानित्यधिकान् दन्तान्, चकारात् केशनखयोरप्यतिवृद्धिर्ज्ञेया । शुक्रमित्यादि । —अतिप्रादुर्भावमित्यतिप्रवृत्तिं शुक्रस्येत्यर्थ ॥ १६ ॥

पुरीषमाटोपं कुक्षौ शूलं च; मूत्रं मूत्रवृद्धिं मुहुर्मुहुः प्रवृत्तिं वस्तितोदमाध्मानं च; स्वेदस्त्वचो दौर्गन्ध्यं कण्डूं च ॥ १७ ॥

मलानामतिवृद्धिं दर्शयन्नाह,—पुरीषमित्यादि ।-आटोपमाध्मान, क्षोभमित्यन्ये । मूत्रमित्यादि । आध्मानमिह वस्तेरेव१७

आर्तवमङ्गमर्दमतिप्रवृत्तिं दौर्गन्ध्यं च; स्तन्यं स्तनयोरापीनत्वं मुहुर्मुहुः प्रवृत्तिं तोदं च; गर्भो जठराभिवृद्धिं स्वेदं च ॥ १८ ॥

उपधातूनामतिवृद्धिं निर्देष्टुमाह,—आर्तवमित्यादि । अङ्गमर्दो वेदनाविशेष. । दौर्गन्ध्य पित्तधर्मत्वादार्तवस्य । तदुक्त—"ईषत्कृष्णं विगन्धं च" इत्यादि । दौर्बल्यमित्यन्ये पठन्ति । चकाराद्रक्तगुल्मादीनपि ॥ १८ ॥

१ 'सन्ध्यस्थिश्लिष्टता सन्धिश्लेषणकफवृद्ध्या युक्तैव' चक्र' ।
२ 'आटोपमीपत्सशब्दमाध्मानम्' चक्र ।
३ 'मूत्रवृद्धि प्रचुरमूत्रनिर्गमम्' चक्र' ।
४ 'आर्तव वृद्धतया वातरोधादङ्गमर्दं करोति' चक्र ।

तेषां यथास्वं संशोधनं क्षपणं च क्षयादविरुद्धैः क्रियाविशेषैः प्रकुर्वीत ॥ १९ ॥

चिकित्सासूत्रं निर्दिशन्नाह—तेषामित्यादि । यथास्व यद्यदात्मीयम् । क्षपणमत्र शमनम् । क्षयादविरुद्धैः क्रियाविशेषैरिति तन्त्रान्तरोक्त । तथाहि,—"छिन्नाविच्छिन्नैर्वायु, पित्तं क्षौद्रफलत्रिकै । कफ गुडार्द्रकाद्यैश्च जयेद्दोषाविरोधिभिः—" इति । अन्ये त्वेवं पठन्ति –'तेषां क्षपणमविरुद्धं क्रियाविशेषैः कुर्वीत' । क्रियाविशेषैरिति क्रिया सशोधनशमनाहाराचाराख्या ॥ १९ ॥

पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्धयेद्धि परं परम् ॥
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ॥२०॥

स्वयं तावदेते वृद्धा अनर्थकरा', परम्परया वर्धिता' पूर्वैपरधातुभिरपि महानर्थकारिण इति दर्शयन्नाह,—पूर्व इत्यादि । हिर्यस्मादर्थे । ह्रासनमिति ह्रासोऽत्र वृद्धेर्हानि' । पूर्व पूर्व इत्याद्युपलक्षणम् । तेन परोऽपि वृद्ध. पूर्वं वर्धयति, तथा परोऽपि क्षीण पूर्व क्षपयति, तथा पूर्व क्षीणः पर क्षपयति । केचिदमु श्लोकं यस्य धातुक्षयाद्वायुरित्यादिश्लोकस्याग्रे पठन्ति ॥ २० ॥

बललक्षणं बलक्षयलक्षणं चात ऊर्ध्वमुपदेक्ष्यामः । तत्र रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते, स्वशास्त्रसिद्धान्तात् ॥ २१ ॥

बललक्षणमित्यादि । परमुत्कृष्टं, तेज इव तेज', तेजो घृतं वा, घृत यथा कृत्स्नक्षीरस्नेहस्तथैवौजोऽपि कृत्स्नधातुस्नेह इत्यर्थ, यत् पर तेज इति यदुत्कृष्ट सार इत्यन्ये व्याख्यानयन्ति । तत् खल्वोजस्तदेव बलमित्युच्यत इति, इयं चाभेदोक्तिश्चिकित्सैक्यार्था, परमार्थतस्तु बलौजसोर्भेद एव; यथा भेदस्तदुच्यते—सर्वधातुस्नेहभूतस्योपचयलक्षणस्यौजसो रूपरसौ वीर्यादि च विद्यते, बलस्य तु भारहरणादिशक्तिगम्यस्य रसवीर्यवर्णादिगुणा न विद्यन्ते, अतोऽनयोर्भेदोऽस्त्येवेति; तथाच बलौजसोर्भेदो वेदोत्पत्तावध्याय उक्त,—"प्राणिना पुनर्मूलमाहारो बलवर्णौजसा च"—इति । तन्त्रान्तरे त्वोज शब्देन रसोऽप्युच्यते, जीवशोणितमप्योज शब्देनामनन्ति केचित्, ऊष्माणमप्योज शब्देनापरे वदन्ति ॥ २१ ॥

तत्र बलेन स्थिरोपचितमांसता सर्वचेष्टास्वप्रति-

१ 'अविरुद्धैरिति वृद्धस्य तथा क्षपण कर्तव्य यथाऽन्यदोषस्य धातोर्वा वृद्धि क्षयो वा न भवतीति भाव' चक्र ।
२ 'सम्प्रति धातुसारभूतत्वेन धात्वभिन्नस्यौजसस्तथा तत्कार्यस्य बलस्य च प्रयोजनवशादभेदेन स्वरूप क्षय च चिकित्सार्थमाह–बलेत्यादि । यत्पर सार घृतमधुस्थानीय प्रत्येकमेव रसादीना यदुत्कृष्टोऽश सारभाग स मिलित्वा हृदयप्रधानस्थानत्वात्तत्रस्थ एव च धमनीभिर्हृदयमूलाभि कृत्स्न शरीर तर्पयति बलहेतुश्च धातूना भवति, शुक्रशोणितसंसर्गात्प्रभृतिशरीरमधितिष्ठते स्वकर्मणा तदोज.' चक्रः ।

**घातः स्वरवर्णप्रसादो वाह्यानामाभ्यन्तराणां च करणानामात्मकार्यप्रतिपत्तिर्भवति ॥ २२ ॥**

वलस्य प्राकृतं कर्म निर्देष्टुमाह—तत्र वलेनेत्यादि । स्थिरोपचितमांसतेति[1] एतत्सर्वं धातुसारोपचयलक्षणेन वलेन, सर्वचेष्टास्विति कायवाङ्मनोव्यापारेषु, अप्रतिघातोऽप्रतिहतशक्तित्वं, एतद्भारहरणादिशक्तिलक्षणेन वलेन, स्वरवर्णप्रसाद इति प्रसादो नैर्मल्य, एतदुभयात्मकेन वलेन । वाह्यानामित्यादि ।—वाह्याना करणाना कर्मेन्द्रियाणा, आभ्यन्तराणा बुद्धीन्द्रियाणाम् । आत्मकार्यप्रतिपत्ति स्वकीयकार्यावबोधो भवति, प्रतिपत्तिरत्रानुष्ठानमित्यन्ये । तत्र वाह्याना वाक्पाणिपादपायूपस्थानामात्मकार्याणि वचनादानगमनविसर्गानन्दनानि, आभ्यन्तराणा करणाना श्रोत्रत्वक्चक्षुर्जिह्वानासिकानामात्मकार्याणि शब्दस्पर्शरूपरसगन्धग्रहणानि, एतदप्युभयात्मकेन वलेन । केचिदन्यथा व्याख्यानयन्ति —वाह्याना श्रोत्रत्वक्चक्षुर्जिह्वानासिकावाक्पाणिपादपायूपस्थाना; आभ्यन्तराणा मनोबुद्धिप्रभृतीना वलकारणभूतमोज. ॥२२॥

**भवन्ति चात्र ।**

**ओजः[2] सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम् ॥**
**विविक्तं मृदु मृत्स्नं च प्राणायतनमुत्तमम् ॥२३॥**
**देहः सावयवस्तेन व्याप्तो भवति देहिनाम्[3] ॥**
**तदभावाच्च शीर्यन्ते शरीराणि शरीरिणाम्॥ २४॥**

वलचिकित्सार्थं स्वचिकित्सार्थमपि च प्राकृतैर्गुणैर्निर्दिशन्नाह,—ओज इत्यादि । सोमात्मकं सौम्यम् । स्निग्धं स्नेहगुणयुक्तम् । शुक्लमतिश्वेतम् । यत्तु चरके—"हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम्—" इत्यादिश्लोकेनौजस्त्रिवर्ण पठितं, तत्र हि शुद्धग्रहणेन शुक्लमुक्तं, अत शुक्लपीतरक्तवर्णास्त्रय उक्ता, अत्राप्योजसस्त्रय एव वर्णा, येनात्र 'शुक्लमोज' इति पठित, शुक्रौजसोरभेदादपर तैलक्षौद्रवर्णद्वयं प्राप्त, तेनात्रापि शुक्लरक्तपीतवर्णास्त्रय एवौजस उक्ताः, न चात्र शुक्रौजसोर्भेदोऽङ्गीकर्तव्य, तस्मिन् सत्यष्टधातुत्वं स्यात्, तस्माद्रसादिधातुस्नेहपरम्पराहेतुक स्नेह शुक्र, क्षीरस्थघृतमिवाभिन्नमोज शुक्रेण । अपरे शुक्लस्थाने शुक्र पठन्ति, युक्त चैतत्, शुक्रवर्णेनैवौजोवर्णाना निर्दिष्टत्वात् । शीतं शीतवीर्यम् । स्थिर शरीरावयवस्थैर्यकारि । सर प्रसरणशीलम् । अन्ये त्वत्र रसमिति पठन्ति, प्रधानरसकल्पनया मधुरमिति व्याख्यानयन्ति च । विविक्तं श्रेष्ठैर्गुणैर्युक्तं; अन्ये तु विविक्तं प्रत्यग्रमाहुः, ततः प्रत्यग्रैरेवान्नादिभिराप्यायनम् । मृदु कोमलम् । मृत्स्न चेति पिच्छिलम् । चकाराद्गुर्वादयो गुणा अनुक्ता. समुच्चीयन्ते । प्राणानामग्नीषोमादीना, आयतन स्थानम् । उत्तम श्रेष्ठम् । तत्र वलेनेत्यादिवाक्येन स्थितौ हेतुत्वं प्रतिपादयति । तेन ओजसा, भवति उत्पद्यते । इदानीं प्रलये तस्यैव हेतुत्वं दर्शयन्नाह,—तदभावादित्यादि । शीर्यन्ते विनश्यन्ति । अय पाठोऽभावात् समग्रो न लिखित ॥ २३ ॥ २४ ॥

**अभिघातात्[1]क्षयात्कोपाच्छोकाद्ध्यानाच्छ्रमात्क्षुधः ।**
**ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ॥**
**तेजः समीरितं तस्माद्विस्रंसयति देहिनः ॥ २५ ॥**

इदानीमभिघातादिभिर्हेतुभिरोजसः क्षय निर्दिशन्नाह,—अभिघातादित्यादि ।—एभ्योऽभिघातादिहेतुभ्य । धातुग्रहणमिति धातवो गृह्यन्ते यैस्तानि धातुग्रहणानि धातुवाहीनि स्रोतासि, तेभ्यो नि सृत निर्गत सर्वधातुस्नेहपरम्परारूपेण; अथवा धातुग्रहणं हृदय धातुवहस्रोतसा स्थानत्वात्, तस्माद्धृदयान्निःसृतं स्रोतसो मुखैरेव । अन्ये तु हृदयमेव धातून् गृह्णातीति धातुग्रहणशब्देनैव हृदयमुच्यते । तेज पित्तं, समीरितं सम्यक्प्रेरितं 'वातेन'इति शेषः । तस्मात् हृदयात्; विस्रंसयति च्यावयति २५

**तस्य[2] विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति; सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियाऽसन्निरोधश्च विस्रंसे, स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने, मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति च क्षये ॥ २६ ॥ २७ ॥**

तस्यौजस. क्षयभेदान् साध्यासाध्यज्ञानार्थं स्वलक्षणैर्निर्दिशन्नाह,—तस्येत्यादि । विस्रंस स्थानाच्च्युतिरभिघातादिभिरेव ।

---

१ 'मास चेह वहिर्दृश्यमानकार्यतयोक्त, तेनेतरेषामपि धातूना स्थिरत्वमुपचितत्वमनेनैवोक्त ज्ञेयम् । अत्र वलरूपतयौजसो वलसपाद्यक्रियास्वप्रतिघातो ज्ञेय. । वाह्याना पाय्वादीना कर्मेन्द्रियरूपकरणाना, आभ्यन्तराणा चक्षुरादीना मन सहिताना, आत्मकार्यमेषा विसर्गादि तथा बुद्ध्यादि तथा चिन्तनादि च, प्रतिपत्तिरत्रानुष्ठान, तेन सर्वेन्द्रियाणा स्वकार्यप्रतिपत्तिरोजोनुग्रहाद्भवतीति वाक्यार्थ ' चक्रः ।

२ 'शुक्लमिति प्राधान्येन शुक्ल, तेन तन्त्रान्तरोक्तरक्ताद्यनुगमोऽप्यविरुद्ध । सरमिति देहव्यापकतया' चक्र· । 'स्थिर सुखदु खयोरचञ्चल करोतीति स्थिर, णिचि पचाद्यच्, विविक्त पूत निर्मलमिति यावत्' हाराणचन्द्र ।

३ 'देहिन ' इति पा० ।

१ 'कुत. खल्विद क्षीयते येन शरीराणि शीर्यन्त इत्याह—अभिघातादित्यादि । क्षयादतिरमणादिना धात्वपचयात् । नन्वेव चेत्तत्व कथ तर्ह्येभिर्हेतुभिरुपतप्ता सर्वक्रियास्वसमर्था अप्यातुरा सद्यो न म्रियन्त इत्याशङ्कयाह—हीत्यादि । सर्वं वाक्य सावधारणमिति न्यायात् । एभ्योऽभिघातादिभ्य एवेत्यर्थ । हि यस्मात् । तेज. सर्वधातूना दीप्तोंऽशः ओज इति निष्कर्ष, वायुना चालित सत् धातुग्रहणनि सृत धातवो गृह्यन्त एभिरिति धातुग्रहणानि वक्ष्यमाणानि स्रोतासि तेभ्यो नि सृत निर्गत भवति, तस्माद्देहिनो विस्रंसयति सर्वेभ्य एव कर्मभ्यो वहिष्करोति ननु सद्यो मारयतीति तात्पर्यम् । एतेनौजस क्षये म्रियते, मूलस्थानात्प्रच्याविते तु सर्वकर्मणामतिपतितो भवतीत्युक्त भवति । वक्ष्यति च 'क्रियासन्निरोधश्च विस्रंसे' इति' हाराणचन्द्र. ।

२ 'व्यापद्दोषदुष्टत्वे गुणहीनत्व, लिङ्गानि भवन्तीत्युत्तरेण सन्धिविश्लेषादिना योज्यम्' चक्र· । 'विस्रंसो व्यापच्च क्षयभेदौ दोषदुष्टतया गुणापचयेनोत्पत्तेरित्यप्रस्तुतप्रस्तावापत्तिर्नाशङ्कनीया, क्षयो हि नाम यथाकथञ्चिदपचय इत्यवोचाम । दोषाणा वातादीना स्वस्थानादपगमो दोषच्यवन, क्रिया वाङ्मन शरीरचेष्टा, तासामसम्यङ्नाशः क्रियाऽसन्निरोध, 'न निरोधो न चोत्पत्ति' इत्यादौ नाशार्थे निरोधप्रयोगदर्शनात् । वक्ष्यति—'अप्राचुर्यं क्रियाणा च' इति हाराणचन्द्र. ।

व्यापदन्यथापत्ति, सा दुष्टदोषदूष्यसंसर्गात्। क्षयः स्वप्रमाणाच्छोकध्यानक्षयादिभिः। लिङ्गानि व्यापन्नस्य भवन्तीति केचित् पठन्ति, व्यापन्नस्य व्यापन्नदोषदूषितस्य। विस्रंसादीनामोजःक्षयभेदानां किं लिङ्गमित्याह,—सन्धिविश्लेष इत्यादि। सन्धिविश्लेषः सन्धीनां विघट्टनम्। दोषच्यवनं स्वस्थानाद्वातादीनां भ्रंशः, अन्ये दोषैः कृत्वा च्यवनमोजस इति वदन्ति, दोषच्यवनं मलानां च्यवनमिति केचित्। क्रियाणां कायवाङ्मानसीनां सन्निरोधः, क्रियाशब्दाग्रे नञ् लुप्तो द्रष्टव्यः, नञ् ईषदर्थे, तेन क्रियाणामीषत्सन्निरोध इत्यन्ये व्याचक्षते। चकाराद्बलस्य प्राक्तनकर्महानिः। एवं व्यापत्तौ क्षये च चकारप्रयोजनम्। एतानि लिङ्गानि विस्रंसे भवन्तीति योज्यम्। स्तब्धगुरुगात्रतेति स्तब्धगुरुभ्यां गात्रतेति सबध्यते। स्तब्धगात्रता जान्वादेरनमनसामर्थ्यम्। वर्णभेदो गौरादिवर्णान्यत्वम्। ग्लानिरप्रहर्षः। तन्द्रा इन्द्रियार्थेऽकर्मण्यता। व्यापन्ने 'लिङ्गानि भवन्ति' इत्यनुवर्तते। मूर्च्छेति मूर्च्छा विज्ञानेन्द्रियनिरोधः। मोहो वैचित्त्यम्। प्रलापोऽसंबद्धभाषणम्। क्षये 'लिङ्गानि भवन्ति' इत्यनुवर्तते ॥ २६ ॥ २७ ॥

**भवन्ति चात्र।**

**त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ॥**
**विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ॥**
**अप्राचुर्यं क्रियाणां च बलविस्रंसलक्षणम् ॥ २८ ॥**
**गुरुत्वं स्तब्धताऽङ्गेषु ग्लानिर्वर्णस्य भेदनम् ॥**
**तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम् ॥ २९ ॥**
**मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च ॥**
**पूर्वोक्तानि च लिङ्गानि मरणं च बलक्षये ॥ ३० ॥**

गद्योक्तमेवार्थं श्लोकैराह,—त्रय इत्यादि। त्रयो दोषास्तिस्रो विकृतयः। विश्लेषसादावित्यादि।—पूर्वोक्तानि विस्रंसव्यापदोर्लिङ्गानीत्यर्थः ॥ २८–३० ॥

**तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्याययेत्, इतरं तु मूढसंज्ञं वर्जयेत् ॥ ३१ ॥**

चिकित्सासूत्रं निर्दिशन्नाह,—तत्रेत्यादि। क्रियाविशेषै रसायनवाजीकरणादिभिः। अविरुद्धैरन्याय्यविरुद्धैः। बलं शक्त्युपचयलक्षणम्। आप्याययेद्वर्धयेत्। क्षीणस्यावस्थाया वर्जनमाह,—इतरमित्यादि।—इतरं क्षीणं वर्जयेत्। किंभूतं वर्जयेदित्याह—मूढसंज्ञं नष्टसंज्ञं, पूर्वं मोहस्योक्तत्वात्। मूढसंज्ञं वर्जयेदित्येतस्याग्रे केचित् सुश्रुताध्यायिनः "तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति, तेन मार्दवसौकुमार्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति, तत् कषायतिक्तगुरुशीतरूक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते, तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति, कार्श्यं मन्दाग्नितांऽधस्तिर्यक्च प्रच्युतिर्व्यापत्तौ, दृष्ट्यनिबलहान्यनिलप्रकोपमरणानि क्षये। तत्र स्नेहपानाभ्यङ्गप्रदेहपरिषेकक्लिन्नबलध्नान्नानि क्षये विदधीत" इत्यमुं पठन्ति। अयं तु पाठो न पठनीयः, कुतः? निबन्धकारैरनार्षीकृतत्वात् ॥ ३१ ॥

**दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः ॥**
**स्वयोनिवर्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥ ३२ ॥**
**यद्यदाहारजातं तु क्षीणः प्रार्थयते नरः ॥**
**तस्य तस्य स लाभे तु तं तं क्षयमपोहति ॥ ३३ ॥**
**यस्य धातुक्षयाद्वायुः संज्ञां कर्म च नाशयेत् ॥**
**प्रक्षीणं च बलं यस्य नासौ शक्यश्चिकित्सितुम् ३४**

दोषेत्यादि।—स्वयोनिवर्धनमात्मकारणवर्धनं यदन्नपानं तदभिलषति। यद्यदित्यादि।—आहारजातमाहारसमूहम्। केचिदाचार्या अमुं श्लोकं न पठन्ति। केचित् सुश्रुताध्यायिनोऽत्र दोषधात्वादिक्षयविनाशार्थं देयमन्नादिकं पठन्ति,—"यवान् मुद्गान् हरेणूंश्च रूक्षं च लघुभोजनम्। कषायकटुतिक्तं च वातक्षीणोऽभिकाङ्क्षति ॥ तिलमाषकुलत्थादि पिष्टान्नविकृतिं तथा। मस्तुशुक्ताम्लतक्राणि पित्तक्षीणस्तथा दधि ॥ मांसं माहिषवाराहमाजं गुडगुरूणि च। श्लेष्मक्षीणोऽभिलषति क्षीरस्वप्नदधीनि च ॥ इक्षुं मांसरसं मन्थं मधु सर्पिर्गुडोदकम्। अस्वप्नासं यवागूं च रसक्षीणोऽभिवाञ्छति ॥ द्राक्षादाडिमयुक्तानि सस्नेहलवणानि च। रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति ॥ अम्लानि दधिसिद्धानि तथा षाडवकानि च। स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति ॥ मेदःसिद्धानि मांसानि ग्राम्यानूपौदकानि च। सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति ॥ रसान् सुसिद्धान् सास्थीनि मांसानीहाभिकाङ्क्षति ॥ अस्थिक्षीणस्तथा मांसं मज्जास्थिस्नेहसंयुतम्। स्वाद्वम्लसंयुतं द्रव्यं मज्जक्षीणोऽभिकाङ्क्षति ॥ मयूरकुक्कुटाण्डानि हंससारसयोस्तथा। ग्राम्यानूपौदकानां च शुक्रक्षीणोऽभिकाङ्क्षति ॥ यवानि यवकान्नानि शाकानि विविधानि च। मायूरं माषयूषं च वर्चःक्षीणोऽभिकाङ्क्षति ॥ पेयामिक्षुरसं क्षीरं सगुडं बदरोदकम्। मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च ॥ अभ्यङ्गं मर्दनं मद्यं निवातशयनासनम्। गुरुप्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति ॥ कट्वम्ललवणाम्लानि विदाहीनि गुरूणि च। फलशाकानुपानानि स्त्री वाञ्छत्यार्तवक्षये ॥ मृगाजाविवराहाणां गर्भान् वाञ्छति संस्कृतान्। वसाशूल्यप्रकारादीन् भोक्तुं गर्भपरिक्षये ॥ सुराशाल्यन्नमांसानि गोक्षीरं शर्करां तथा। आसवं दधि हृद्यानि क्षये स्तन्यस्य वाञ्छति ॥" यस्येत्यादि, इतरं तु मूढसंज्ञं वर्जयेदित्यनेनैवास्योक्तार्थत्वात् केचिदमुं न पठन्ति, सर्वधातुक्षयव्यापकत्वाद्भिन्नविषयोऽयं श्लोकस्तस्मात् पठनीय इत्यन्ये ॥ ३२–३४ ॥

---

१ 'अविरुद्धैरोजोनुकूलैः, अत्र मूढसंज्ञमिति विशेषणं तदवस्थायामेव वर्जनार्थम्', डाराणचन्द्र।

२ 'नष्टसंज्ञमितरं तु' इति पा०।

१ 'धातुक्षयादित्योजःक्षयात्, संज्ञा ज्ञानं, कर्म व्यापारः, एतयोरुपरम एव मूर्च्छा। बलं शक्तिः। अत्र दोषादिक्षयवृद्धिप्रकरणे प्रतिकर्तव्या ओजसो वृद्धिर्नाभिहिता, तस्यायुर्वृद्धिवन्निर्विकारत्वेनाभिमतत्वादेव' चक्र।

**रसनिमित्तमेव स्थौल्यं कार्श्यं च । तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्य चाम एवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति; तमतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेवाविशन्ति, सौकुमार्यान्मेदसः सर्वक्रियास्वसमर्थः, कफमेदोनिरुद्धमार्गत्वाच्चाल्पव्यवायो भवति, आवृतमार्गत्वादेव शेषा धातवो नाप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति, प्रमेहपीडकाज्वरभगन्दरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति, सर्वे एव चास्य रोगा बलवन्तो भवन्त्यावृतमार्गत्वात् स्रोतसां, अतस्तस्योत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जनमधुयवमुद्गकोरदूषकश्यामाकोद्दालकादीनां विरूक्षणच्छेदनीयानां द्रव्याणां विधिवदुपयोगो व्यायामो लेखनबस्त्युपयोगश्चेति[2] ॥ ३५ ॥**

रसनिमित्तमित्यादि । चकारान्मध्यशरीरत्वं च । ननु, कथमेक एव रसः परस्परविरुद्धयोः स्थौल्यकार्श्ययोर्हेतुरित्यत आह,—तत्रेत्यादि । अध्यशनशीलस्येति अजीर्णभोजनाभ्यासिन इत्यर्थः । ननु, मेदस्विनो दीप्ताग्नित्वे कथमामरससंभवः? नैष दोषः, दीप्ताग्नित्वेऽप्यध्यशनशीलत्वादामरसो भवति । तर्हि कथं रसश्चापक्वश्चेति विरोधीयवचनं[1] नह्यपक्वो रसव्यपदेशं लभते । सत्यं, जाठरेणाग्निना रसः कट्ठावेन कृत एव, किंतु धात्वग्निभिरपाकादाम इत्युच्यते । शरीरमनुक्रामन्निति तं तं शरीरदेशं गच्छन्नित्यर्थः । मेदो जनयति विशिष्टाहारवशाददृष्टवशान्मेदसाऽऽवृतमार्गत्वाच्च धातुद्वयमतिक्रम्य मेद एव वर्धयति । तदतिस्थौल्यमापादयतीति तन्मेदः; आपादयति करोति । क्रथनं स्वपतः कण्ठे घुर्घुरारवः, अन्ये त्वकस्माच्छ्वासावरोधं क्रथनं कथयन्ति । गद्गदत्वमव्यक्तवचनत्वम् । क्षिप्रमेवाविशन्तीति एते क्षुद्रश्वासादयस्तं स्थूलं शीघ्रमेव प्रविशन्ति, स्थूले भवन्तीत्यर्थः । शेषधातवो नाप्यायन्तेऽत्यर्थमिति शेषधातवोऽस्थ्यादयः । वातविकाराणामिति अत्र वातविकारा मेदःकृतमार्गावरणनिमित्तवातकोपविकारा इत्यर्थः । अन्यतममित्येषामेकम् । पञ्चत्वमुपयातीति मरणमुपगच्छतीत्यर्थः । तस्य चिकित्सामाह,—अत इत्यादि । तस्योत्पत्तिहेतुं परिहरेदित्यनेन निदानपरिवर्जनेनानागताबाधचिकित्सोक्ता । उत्पन्ने जाते पुनरित्यर्थः । उद्दालकादीनामित्युद्दालक आरण्यकोद्रवः, आदिशब्दाद्वेधुकादीनां ग्रहणम् । विरूक्षणच्छेदनीयानामिति विरूक्षणं मेदोघ्नं, छेदनीयं स्रोतोविशोधनीयम् । विधिवदुपयोग इति पुरुषाग्निबलमात्राविधानवानुपयोग इत्यर्थः । लेखनबस्त्युपयोगश्च लेखनबस्तयश्चिकित्सितोक्ताः, "त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमन्विताः । ऊषकादिप्रतीवापा बस्तयो लेखनाः स्मृताः." । चकाराद्व्यायामादयो मृदवः काङ्कायनसक्तवश्च ॥ ३५ ॥

**तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययनभयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमननुक्रामन्नल्पत्वान्न प्रीणाति, तस्मादतिकार्श्यं भवति; सोऽतिकृशः क्षुत्पिपासाशीतोष्णवातवर्षभारादानेष्वसहिष्णुर्वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति, श्वासकासशोषप्लीहोदराग्निसादगुल्मरक्तपित्तानामन्यतममासाद्य मरणमुपयाति, सर्वे एव चास्य रोगा बलवन्तो भवन्त्यल्पप्राणत्वात्; अतस्तस्योत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु पयस्याश्वगन्धाविदारिगन्धाशतावरीबलातिबलानागबलानां मधुराणामन्यासां चौषधीनामुपयोगः, क्षीरदधिघृतमांसशालिषष्टिकयवगोधूमानां च, दिवास्वप्नब्रह्मचर्याव्यायामबृंहणबस्त्युपयोगश्चेति ॥ ३६ ॥**

कार्श्यनिमित्तं दर्शयन्नाह,—तत्र पुनरित्यादि । वातलाहारसेविन इत्यतिरूक्षाहारसेविनः । अतिव्यायामेत्यादि अतिशब्दो व्यायामादिभिः प्रत्येकं संबध्यते । क्षयो धातुक्षयः । उपशोषितो रसधातुरिति उपशोषितोऽतिरूक्षीकृतोऽल्पीकृतश्च । न प्रीणाति ईषत्प्रीणातीत्यर्थः । सोऽतिकृश इत्यनेनोपचयलक्षणबलाभावो दर्शितः । वातरोगप्राय इति वातरोगबहुल इत्यर्थः । अल्पप्राणश्च क्रियासु भवतीति कायवाङ्मानसीषु क्रियासु विषयेष्वल्पशक्तिर्भवति । एतेन शक्तिलक्षणबलाभाव उक्तः । शोषो राजयक्ष्मा । उत्पन्ने त्विति 'कार्श्ये' इति शेषः । पयस्या अर्कपुष्पी, क्षीरकाकोलीत्यन्ये । विदारिगन्धा शालिपर्णी । मधुराणामित्यादि । ऋद्धिवृद्धिजीवकादीनाम् । बृंहणबस्त्युपयोगश्चेति बृंहणबस्तिर्यथा,—"बृंहणद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः । युक्ता खजप्रमथिता बस्तयो बृंहणा मताः."—इति । चकारात् संतर्पणमपि लघु कर्तव्यम् ॥ ३६ ॥

**यः पुनरुभयसाधारणान्यासेवेत तस्यान्नरसः शरीरमनुक्रामन् समान् धातूनुपचिनोति, समधातुत्वान्मध्यशरीरो भवति सर्वक्रियासु समर्थः क्षुत्पिपासाशीतोष्णवर्षातपसहो बलवांश्च, स सततमनुपालयितव्य इति ॥ ३७ ॥**

मध्यशरीरस्य हेतुं गुणं च दर्शयन्नाह,—यः पुनरित्यादि । उभयसाधारणानि नातिस्निग्धरूक्षाणि स्वास्थ्यवृत्तिकानि द्रव्याणि षष्टिकरक्तशालिलावकदाडिमतण्डुलीयकादीनि, अदिवास्वप्नादींश्च विहारविशेषान् । सर्वक्रियासु समर्थ इत्यनेनैव बलवत्त्वे लब्धे यद्बलवांश्चेति करोति तन्नियमार्थं, एवंभूताहारविहारसेवी बलवा-

---

१ 'आम एवेति इवार्थोऽयमेवशब्दः', रक्तादिरूपेणापरिणततयाऽपक्व इवेत्यर्थः; न तु 'आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः' इत्यादिनोक्तः, तस्य रोगहेतुतयाऽऽमाशयस्थत्वेन च मेदोजनकत्वायोगात्' चक्र ।

२ 'चकारात् 'गुरु चातर्पणं श्रेष्ठं स्थूलानां कर्षणं प्रति' इति समुच्चिनोति' चक्र ।

नेव भवतीत्यर्थः। मध्यशरीरस्य चिकित्सामाह,—स सततमनुपालयितव्य इति 'स्वस्थवृत्तानुवर्तनेन' इति शेषः ॥ ३७ ॥

भवन्ति चात्र ।

**अत्यन्तगर्हितावेतौ सदा स्थूलकृशौ नरौ ॥**
**श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात्तु पूजितः॥३८॥**

तयोर्द्वयो कृशस्थूलयोर्दोषवत्त्वेऽपि स्थूलस्यातिशयदोषवत्त्वं मध्यशरीरस्य च गुणवत्त्वं निर्देष्टुमाह,—अत्यन्तेत्यादि । कुत. स्थूलात् कृश पूजित ? उच्यते, स्थूलस्य क्रियाऽक्षमत्वात्, अतिशयेन व्याधिपीडनाच्च ॥ ३८ ॥

**दोषः प्रकुपितो धातून् क्षपयत्यात्मतेजसा ॥**
**इद्धः स्वतेजसा वह्निरुखागतमिवोदकम् ॥ ३९ ॥**

दोषादीना क्षयवृद्ध्योरेकत्र निर्देशेऽपि दोपा एव धातुमलक्षयहेतव इति दर्शयन्नाह,—दोष इत्यादि । दोपो वातपित्तकफसंज्ञक । धातूनिति धातुशब्दोऽत्र मलेष्वपि वर्तते, देहधारणसामर्थ्यात्, अथवा धातुशब्द उपलक्षणं, तेन मला प्राप्यन्ते । क्षपयतीति क्षपणं वृद्धिसाम्ययो· ह्रास । आत्मतेजसा इति आत्मशक्त्या । तत्र पित्त कटुकोष्णत्वाद्धातून् क्षपयति, वायुश्च शोषणहेतुत्वात्, कफो मार्गावरोधकत्वात् । इद्धो दीप्त । उखागतं स्थालीस्थम् ॥ ३९ ॥

**वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च ।**
**दोषधातुमलानां तु परिमाणं न विद्यते ॥ ४० ॥**

कुत. पुन· पलादिमानेन दोषादीना प्रमाणं न निर्दिष्टमित्याह,—वैलक्षण्यादित्यादि ।—वैलक्षण्यात् विसदृशत्वात्, विसदृशत्व चात्र वातादिप्रकृति-रसरक्तादि-भारसहन दीर्घह्रस्वादिकायभेदेन । अस्थायित्वात्तथैवेति अनवस्थितत्वात्, अस्थायित्वं द्विविधेऽपि काले नित्यग आवस्थिकेऽपि च, तत्र नित्यगे प्रात श्लेष्मोपचीयते मध्याह्ने पित्तमित्यादि प्रत्यहमाह्निकचयादिभेदेन, तथा हेमन्ते श्लेष्मोपचीयते ग्रीष्मे वायुरित्याद्यार्तवचयादिभेदेन, तथाऽऽवस्थिकेऽपि बाले श्लेष्माऽभिवर्धते, तथा बाल्ये शुक्राल्पत्व कन्यानामार्तवस्तन्याभाव , युवसु पित्तमुपचीयते, वृद्धेषु वायुरित्यादिना । परिमाणमिति सर्वतो मान न विद्यते, तेन कस्यचिदेव क्वचिदेव मान कर्तु शक्यते, न सर्वत इत्यर्थ ॥ ४० ॥

**एषां समत्वं यच्चापि भिषग्भिरवधार्यते ॥**
**न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना॥४१॥**

ननु, दोपादीना पलादिमानं विना साम्य कथ ज्ञेयमित्याह,—एषामित्यादि ।—दोषधातुमलानाम् । न तदिति तदपि साम्यम् । स्वास्थ्यादृते स्वास्थ्य विना ॥ ४१ ॥

**दोषादीनां त्वसमतामनुमानेन लक्षयेत् ॥**
**अप्रसन्नेन्द्रियं वीक्ष्य पुरुषं कुशलो भिषक् ॥४२॥**

क्षयवृद्धिभेदात्मकमसाम्यमनुमानेन दर्शयन्नाह,—दोषादीनामित्यादि ।—आदिशब्देन धातुमलाना ग्रहणम् । तुशब्द पुनरर्थे । असमता क्षयवृद्धिलक्षणाम् । अप्रसन्नेन्द्रियमित्यत्राप्रसन्नतनुमिति यत्र कृत तदिन्द्रियाधिष्ठानानामिन्द्रियशक्तीना च प्रसन्नत्व बोधयति । वीक्ष्येत्यनेन वर्णादि सर्वमुक्तं भवति । वीक्ष्येत्यत्र 'ज्ञात्वा' इत्येके पठन्ति ॥ ४२ ॥

**स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान् ॥**
**क्षपयेद्बृंहयेच्चापि दोषधातुमलान् भिषक् ॥**
**तावद्यावदरोगः स्यादेतत्साम्यस्य लक्षणम् ॥४३॥**

असाम्य वृद्धिक्षयात्मकमित्यनुमानेन प्रतिपाद्य किं कुर्यादित्याह—क्षपयेदित्यादि ।—क्षपयेद्वृद्धान् दोपधातुमलान् ह्रासयेदित्यर्थ· । बृंहयेद्वर्धयेत्तानेव क्षीणान् । क्षपणबृंहणयोर्मात्रावधिं दर्शयन्नाह,—तावदित्यादि । कुत पुनरारोग्येऽवधिरित्याह,—एतत् साम्यस्य लक्षणमित्यादि । अयं पाठ समग्रोऽभावान्न लिखित ॥ ४३ ॥

**समदोषः समाग्निश्च समधातुमलक्रियः ॥**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥४४॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥**

दोपादिसाम्यं स्वास्थ्यं, तद्दर्शयितुमाह,—समदोष इत्यादि । ननु, द्विविधेऽपि काले नित्यं दोपचयाद्यनुबन्धात् कथं समदोषत्व ? तथाहि नित्यगे—आह्निके तावत् प्रात कफ कुप्यति, मध्याह्ने पित्तमित्यादि, तथाऽऽर्तवेऽपि हेमन्ते कफश्चीयते वसन्ते स एव कुप्यतीति, तथाऽऽवस्थिके च काले 'बाले विवर्धते श्लेष्मा' इत्याद्युक्तत्वात् । उच्यते,—दोषचयादेरल्पत्वादतद्व्यपदेश इति, एकतण्डुलाभ्यवहारेऽनशनव्यपदेशवत् । अन्ये त्वेवं वदन्ति,—आर्तवे चयादौ स्वस्थवृत्तोक्तविधिभिराहोरात्रिके पुनरनागतावाधोक्तदन्तधावनादिविधानेन दोपाणा साम्यमुपपन्नमेवेति । समधातुमलक्रिय इति समा धातुमलाना क्रिया यस्य स तथा । क्रिया स्वप्नजागरणादिकेति केचिद्भिन्न क्रियाशब्दं व्याख्यानयन्ति । प्रसन्नात्मेन्द्रियमना इति आत्मा देहः, अन्ये कर्मात्मबद्धपुरुषा , तस्य निर्विकारस्यापि शरीरगुणदोषाभ्या बद्धत्वमाचार्यैर्बहुधोक्तं, अस्माभिर्ग्रन्थगौरवभयान्नोच्यते । इन्द्रियाणि भौतिकाधिष्ठानशक्तिरूपाणि, मनस्त्विन्द्रियानुग्राहकमन्त करणम् । एवभूत पुरुष स्वस्थ इत्यभिधीयते 'पूर्वाचार्यै' इति शेष । दोषसाम्येनैवाग्न्यादिसाम्यं लब्धं तत् किं पृथगाचार्य प्राह ? उच्यते, न दोपै समा अग्न्यादयो भवितुमर्हन्तीति; कुत ? पृथक्चिकित्सितत्वात्, पित्तहरणमपि सर्पिरजापयश्चाग्निं वर्धयति । अत्र श्रीमाधव प्राह,—"लब्धाश्च समदोषत्वे समामिलादयस्तदा । पृथगुक्ता किमर्थं ते भक्तिरेषा निरर्थका"—इति, समाधानमाह,—"दोषेभ्यस्ते यतो भिन्ना· पृथगुक्ता ह्यतस्तु ते । प्रकृत्या तादृशा· केचिदत्यर्थं वा न दूषणम्"—इति । दोषादीना त्वसमतामित्यादिश्लोक वैलक्षण्याच्छरीराणामित्यादिश्लोकाग्रे केचिदन्यथा पठन्ति । तथाहि, पलादिमाना-

१ 'शरीरवैलक्षण्ये च तद्दोषादिमानवैलक्षण्यमित्यर्थः' चक्र ।

१ 'स्यान्नरो रोगसमन्वित' इति पाठान्तरम् ।

भावात् कथमेषां साम्यं ज्ञेयमित्याह,—'दोषादीनां त्वसमतामनुमानेन लक्षयेत्' इति श्लोकार्धमेव दोषसाम्यज्ञानार्थं पठन्ति। येनानुमानेन समता ज्ञेया तदेव दर्शयन्नाह,—एषा समत्वं यच्चापीत्यादि। एतेन साम्यकार्येण स्वास्थ्येन दोषाणां समता ज्ञातव्येत्यर्थः। अतोऽनन्तरं समदोषः समाग्निश्चेत्यादि पठन्ति। व्याख्यानं चास्य पूर्वमेवोक्तम्। इदानीं स्वस्थप्रतिपालनायास्वस्थस्य च स्वास्थ्यकरणायाह,—'स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान्। क्षपयेद्बृंहयेच्चापि' इत्यादि; ईदृशं कृत्वा केचित् पाठक्रमं पठन्ति ॥ ३३—३५ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः।

**अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः १ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते। तौ षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारधराङ्के वा कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्र आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेनर्जु विध्येत्, प्रतनुकं सूच्या, बहलमारया; पूर्वं दक्षिणं कुमारस्य, वामं कुमार्याः; ततः पिचुवर्तिं प्रवेशयेत् ॥ ३ ॥**

रक्षाभूषणनिमित्तमिति निमित्तशब्दो रक्षाभूषणाभ्यां सह प्रत्येकं सबध्यते, अन्ये तु रक्षणार्थं भूषणानि रक्षाभूषणानि, तन्निमित्तमित्यर्थः। यद्यपि विद्धकर्णत्वाद्व्रणिनि बाले रक्तमांसप्रियत्वाद्रक्षोभयमस्त्येव, तथाऽपि व्रणस्याल्पकालत्वाद्दैवकृतच्छिद्रत्वाद्वा रक्षणार्थं भवति। कस्मिन् काले कर्णस्य व्यधः कर्तव्य इत्याह,—तौ षष्ठे मासे सप्तमे वा शुक्लपक्ष इति। ताविति तौ कर्णौ, षष्ठे मासे सप्तमे वेति नायं जन्मकालादूर्ध्वं किंतु संवत्सरादेर्भाद्रपदाद्यः षष्ठो मासो माघः सप्तमः फाल्गुनस्तयोर्मध्य एकस्मिन्निति। मङ्गलं गीतादि। स्वस्तिवाचनमाशीर्वादोच्चारणम्। धात्र्यङ्क इति धात्री कुमारपरिचारिका।-कुमारधराङ्के वेति बालग्राहिपुरुषस्योत्सङ्गे। बालक्रीडनकैरिति कृत्रिमहस्त्यश्वबलीवर्दशुकादिभिः। अस्याग्रे भक्ष्यविशेषैर्वेति केचित् पठन्ति, भक्ष्यविशेषैर्मोदकादिभिः। दैवकृते छिद्र इति प्राक्तनजन्मकर्मकृत इत्यर्थः। ऋज्ववक्रम्। कर्णविशेषेण सूचीविशेषविषयं नियमयन्नाह,—प्रतनुकं सूच्येति।—प्रकर्षेण तनुं कर्णं सूच्या विध्येदित्यर्थः, बहलमारयेति स्थूलकर्णमारया विध्येदित्यर्थः; आरा चर्मकाराणां चर्मभेदनं शस्त्रं, बहलं कठिनमिति लक्ष्मणटिप्पणकेनोक्तम्। पुरुषस्त्रीभेदेन प्राक्कर्णव्यधने प्रशस्तत्वेन विशेषमाह,—पूर्वं दक्षिणमित्यादि। कर्णे विद्धे सति किं कार्यमित्याह,—तत इत्यादि। विद्ध्वा च पिचुवर्तिं प्रवेशयेत् ॥ १-३ ॥

**शोणितबहुत्वेन वेदनया चान्यदेशविद्धमिति जानीयात्, निरुपद्रवतया तद्देशविद्धमिति ॥ ४ ॥**

अन्यदेशविद्धस्य विज्ञानोपायमाह,—शोणितबहुत्वेनेत्यादि। दैवकृतच्छिद्रविद्धस्य विज्ञानमाह,—निरुपद्रवतयेत्यादि। तद्देशविद्धमिति दैवकृतच्छिद्रविद्धं, 'जानीयात्' इत्यनुवर्तते ॥ ४ ॥

**तत्राज्ञेन यदृच्छया विद्धासु सिरासु कालिकामर्मरिकालोहितिकासूपद्रवा भवन्ति। तत्र, कालिकायां ज्वरो दाहः श्वयथुर्वेदना च भवति; मर्मरिकायां वेदना ज्वरो ग्रन्थयश्च; लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति। तेषु यथास्वं प्रतिकुर्वीत ॥ ५ ॥**

सिरासु दोषं वक्तुमाह,—तत्राज्ञेनेत्यादि। ज्ञेन तु कालिकालोहितिकयोर्वर्णेनैव परिहारः कर्तव्यः, मर्मरिकायास्तु वर्णानुक्तौ दैवकृतच्छिद्रव्यधनेनेति। प्रत्येकमुपद्रवान् वक्तुमाह,—तत्र कालिकायां ज्वर इत्यादि। कालिकादिव्यधोपद्रवचिकित्सामाह,—तेषु यथास्वमित्यादि। तेषु ज्वरादिषु व्याधिषु, यथास्वं प्रतिकुर्वीतेति यस्य ज्वरादिव्याधेर्यः प्रतीकारस्तेन तं प्रतिकुर्वीतेत्यर्थः ॥ ५ ॥

**क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्तित्वाद्दोषसमुदायादप्रशस्तव्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्तिमुपहृत्याशु मधुकैरण्डमूलमञ्जिष्ठायवतिलकल्कैर्मधुघृतप्रगाढैरालेपयेत्तावद्यावत् सुरूढ इति; सुरूढं चैनं पुनर्विध्येत्; विधानं तु पूर्वोक्तमेव ॥ ६ ॥**

कालिकादिव्यधादन्यथाऽपि व्यापदं चिकित्सां च निर्दिशन्नाह,—क्लिष्टजिह्माप्रशस्तेत्यादि। क्लिष्टा अमनोज्ञा, जिह्मा वक्रतमा, अप्रशस्ता यथोक्तगुणहीना। दोषसमुदायादिति दोषप्रकोपात्। अप्रशस्तव्यधाद्वेति अदैवकृतच्छिद्रे व्यधाद्गर्हितशस्त्रादिव्यधाद्वा। संरम्भः श्वयथुः। केचित् 'क्लिष्टजिह्माप्रशस्तसूची-

---

१ 'पूर्वाध्यायोक्तस्वस्थाधिकारात्स्वस्थविषयकर्णव्यधबन्धविधिरुच्यते; तेनाधिकारानुवृत्तिरिह सबन्धः' चक्रः।

२ 'यद्यपि कर्णव्यधने व्रणिनि बाले रक्षोभयं भवति, तथाऽपि तदल्पकालं प्रतिकर्तव्यं च, तेन चिरकालरक्षार्थं तदल्पं त्यज्यत एव' चक्रः।

३ 'कुमारधराङ्के' इति हाराणचन्द्रो न पठति।

४ 'दैवकृते छिद्रे इति दैवेन कर्णव्यधार्थं सूर्यालोकदृश्यमानप्रतनुप्रदेशरूपं सिरादिभी रहितं निर्लोहितागमनं च छिद्रं कृतमस्तीति भावः' चक्रः।

५ 'पिचुवर्तिरिह तूलसूत्ररूपैव प्रवेशनाहरणसौकर्यात्' हाराणचन्द्रः।

६ 'ततो वर्तिं प्रवेश्य सम्यग्विद्धमामतैलेन परिषेचयेत्' इति पा०।

१ कालिका(Vein), लोहितिका(Artery)।

२ संरम्भः श्वयथुरागवेदनाप्रादुर्भावः।

व्यधाद्गाढतरवर्तित्वात्' इति न पठन्ति, दोषसमुदायादित्यादि च पठन्ति । सुरूढं चैनं पुनर्विध्येदिति च न पठन्ति ॥ ६ ॥

**तत्र सम्यग्विद्धमामतैलेन परिषेचयेत्त्र्यहात्त्र्यहाच्च वर्तिं स्थूलतरां दद्यात् परिषेकं च तमेव ॥ ७ ॥**

दुर्विद्धे व्यापच्चिकित्सा प्रतिपाद्य सम्यग्विद्धे चिकित्सामाह,—तत्रेत्यादि । आमतैलेनेति अपक्वतैलेन, तिलकल्कनिपीडनेन च्युतितः परिस्रुतेनेत्यर्थ, तमेवेति आमतैलपरिषेकमेवेत्यर्थ ॥७॥

**अथ व्यपगतदोषोपद्रवे कर्णे वर्धनार्थं लघुवर्धनकं कुर्यात् ॥ ८ ॥**

गतोपद्रवे कर्णे वर्धनोपायमाह,—अथेत्यादि । लघुवर्धनकमिति दोषविशेषादपामार्गनिम्बकार्पासादीना काष्ठानामन्यतमस्य, अथवा सीसकादिघटिता धत्तूरपुष्पाकृतिं कुर्यात् ॥ ८ ॥

**एवं विवर्धितः कर्णश्छिद्यते तु द्विधा नृणाम् ॥**
**दोषतो वाऽभिघाताद्वा सन्धानं तस्य मे शृणु ९**

एवमित्यादि । दोषत इति दोषशब्दो व्याधिष्वपि वर्तते, तेन दोषैर्वातादिभिस्तज्जनितव्याधिभिर्वेत्यर्थ । अभिघाताद्वेति पतनपीडनादिभि ॥ ९ ॥

**तत्र समासेन पञ्चदशकर्णबन्धाकृतयः । तद्यथा —नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्यो निर्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति । तेषु, पृथुलायतसमोभयपालिर्नेमिसन्धानकः; वृत्तायतसमोभयपालिरुत्पलभेद्यकः, ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः; अभ्यन्तरदीर्घैकपालिरासङ्गिमः; बाह्यदीर्घैकपालिर्गण्डकर्णः; अपालिरुभयतोऽप्याहार्यः; पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः; स्थूलाणुसमविषमपालिर्व्यायोजिमः; अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः; बाह्यदीर्घैकपालिरितराल्पपालिरर्धकपाटसन्धिकः । तत्र दशैते कर्णबन्धविकल्पाः साध्याः; तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः । संक्षिप्तादयः पञ्चासाध्याः । तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः; अनधिष्ठानपालिः पर्यन्तयोः क्षीणमांसो हीनकर्णः; तनुविषमाल्पपालिर्वल्लीकर्णः; ग्रथितमांसस्तब्धसिरासंततसूक्ष्मपालिर्यष्टिकर्णः; निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठक इति । बद्धेष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति ॥ १० ॥**

इदानीं संधेयस्य सन्धानायासंधेयस्य परिहाराय चाह,—तत्रेत्यादि । समासेन सक्षेपेण, विस्तरेण तु कर्णबन्धा असिताः, यद्यपि पञ्चदशसु कर्णेषु मध्ये दशैव बन्ध्यास्तथाऽपि बन्ध्यबाहुल्यादबन्ध्येष्वपि बन्धशब्दो वर्तते, यथा छत्रिणो यान्तीत्यत्र छत्रिबाहुल्यादच्छत्रिष्वपि छत्रिव्यपदेश । 'तत्र समासेन पञ्चदशकर्णाकृतय' इत्यन्ये पठन्ति । तानेव बन्धानामभिर्निर्दिशन्नाह—तद्यथा,—नेमिसधानक इत्यादि । तद्यथेति निदर्शने । तत्रामी बन्धविकल्पा नित्यकर्मदर्शनादभ्यासाच्च जायन्ते । यद्यप्येषां नामभिरेवाकृतयः प्रायेण व्याख्यातास्तथाऽपि लक्षणसूत्रं निर्दिशन्नाह,—तेषु पृथुलायतेत्यादि । पृथुले विस्तीर्णे, आयते दीर्घे, समे तुल्ये, इत्थंभूते द्वे पाल्यौ यस्य स तथा; पालि कर्णलतिका । वल्लूरक इति वल्लूरं शुष्कमास, शुष्कमांसवदनेकधा विपाट्य यः संधीयते स वल्लूरक । समुन्नतसमोभयपालिरित्येके पठन्ति । नेमिसधानक इति नेमी चक्रधारा, तद्वत् सन्धानं यस्य स नेमिसधानकः । एतत् कर्णबन्धत्रयं समोभयपालिविषयतया ज्ञेयम् । अभ्यन्तरदीर्घैकेति यस्त्वभ्यन्तरदीर्घैकपालिः कथंचिच्छिन्नो भवति तस्येतरपाल्यभावाद्बाह्यपालिमूले व्यासङ्ग आसङ्गिमः । गण्डकर्ण इति सानुबन्धकपोलमासमुत्कृत्य बाह्यदीर्घपाल्यग्रभाग सधीयते यस्मिन् स गण्डकर्ण । एतद्बन्धद्वयमेकपालिकम् । अपालिरिति ईषत्पालिः । उभयतो गण्डप्रदेशात् सानुबन्धमासमाहृत्य पाल्याकारं कृत्वा सधानं यस्य क्रियते स आहार्य । पीठोपमपालिरिति यस्य तु पालिद्वयं मूलत एव छिन्नं भवति स पीठोपमपालि, निर्वेधिम इति वेधेन निष्पन्न इत्यर्थः, पालिद्वयहीनं कर्णपुत्रिकाया उपरि विद्धा निष्पादनीय इत्यर्थः; इदमपालिकं कर्णबन्धद्वयम् । स्थूलाणुसमेति स्थूलाणुत्वाभ्यामेका पालि समा, अपरा विषमा, ते उल्लिख्य नानाप्रकारयोजनाद्व्यायोजिम इति । अभ्यन्तरदीर्घैकपालिरिति अभ्यन्तरदीर्घैकपालिरितराल्पपाल्या सह बहिःसधानात् कपाटवत्संधानं यत्र स कपाटसधिक । अर्धकपाटसंधिक इति बाह्यदीर्घैकपालिरित-

१ 'दोषत इति शरीरदोषप्रक्षोभात्' चक्र० ।

२ 'तत्रेत्यादिना बन्धविशेषार्थं तथाऽसवेयकर्णपरित्यागार्थं च पाल्याकृतिविशेषानाह । यद्यपि दशकर्णा अत्र बन्धनार्हा वक्तव्याः, पञ्चासाध्यत्वान्न बन्ध्यास्तथाऽपि पञ्चदशकर्णबन्धाकृतय इति वचनादबन्ध्यानामपि बन्धसभावनामात्र बन्धसबन्धाज्ज्ञेयम् । ये तु 'कर्णाकृतय' इति पठन्ति तद्ग्रन्थ स्पष्ट एव । नेमिसन्धानक इति नेमिसधानवन्धेन बन्धनीय ; एवमुत्पलभेद्यकादावपि व्याख्येयम् । वृत्तेत्यादौ पूर्वसादृश्ये वृत्तत्व पाल्योर्विशेष, अत एवोत्पलतुल्यतयोत्पलभेद्यको बन्धो भवति । ह्रस्वेत्यादावनतिदीर्घत्व पूर्वसाद्विशेष । अभ्यन्तरो गण्डदेश', एतद्विपर्ययेण बाह्य० । निर्वेधिम इति पुन० प्रदेशान्तरवेधेन निष्पन्नः । वैषम्य लिखित्वा बन्धेन योज्यत इति व्यायोजिमः । निर्मांसेत्यादौ काकौष्ठसदृशत्वात्काकौष्ठक' चक्र' ।

१ 'शुष्कशष्कुल्यादित सकुचितो बन्ध सक्षिप्त.' हाराणचन्द्रः ।

२ 'सवेधितस्य' इति पाठान्तरम् ।

३ 'बन्ध्यबाहुल्यादबन्ध्येष्वपि' इति पाठान्तरम् ।

४ 'आसञ्जनात्' इति पा० ।

शल्पपाल्या सहाऽभ्यन्तरसंधानेनार्धकपाटवद्यत्र सन्धीयते सोऽर्धकपाटसन्धिकः । इदं कर्णबन्धत्रयं विपमोभयपालिकम् । तत्र दर्शते कर्णबन्धेति तत्र तेषु पञ्चदशसु कर्णबन्धविकल्पेषु मध्ये । तेषामाकारज्ञानमधिकृत्याह,—तेषा नामभिरेवेत्यादि । शेषाणां परिहारार्थमाह,—सक्षिप्तादय· पञ्चासाध्या इति । तेषा लक्षणमाह,—शुष्कशष्कुलिरिति शुष्कबाह्यपाल्यधिष्ठानः, इतराल्पपालिरिति इतरा गण्डदेशानुगता अल्पा पालिर्यस्य स तथा । अनधिष्ठानपालिरिति अविद्यमानाऽधिष्ठानपालिर्यस्य स तथा, पर्यन्तयोश्च गण्डबाह्यपार्श्वयो· । तनुविषमाल्पेति विपमा तनुत्वस्थूलत्वाभ्याम् । त एते पञ्च कर्णबन्धा सपाल्योऽथासाध्याः; असाध्या इति साधनायाशक्या ; केचिदमुं पाठं न पठन्ति । एतेषा पञ्चानामसाध्यत्वे हेतुमाह,—बद्धेष्वपीत्यादि । अन्ये तु शोफाद्युपद्रवोपेताना पूर्वेषां दशाना बन्धाना साध्यानामप्यसाध्यत्वमाहुः ॥ १० ॥

भवन्ति चात्र ।

**यस्य पालिद्वयमपि कर्णस्य न भवेदिह ॥**
**कर्णपीठं समे मध्ये तस्य विद्ध्वा विवर्धयेत् ॥११॥**

गद्योक्ताना कर्णबन्धाना मध्ये निर्वेधिमस्य संधानसूत्रमाह,—यस्येत्यादि । इहेति कर्णबन्धमध्ये । कर्णपीठं पुत्रिकोपरिप्रदेशम् ॥ ११ ॥

**बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् ॥**
**आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः ॥१२॥**

व्यायोजिमकपाटसन्धिकार्धकपाटसन्धिकानां संधानसूत्रमाह,—बाह्यायामिह दीर्घायामित्यादि । यदा बाह्या पालि दीर्घा भवेत्तदा आभ्यन्तर· सन्धि कर्तव्य इत्यर्थ , आभ्यन्तरा च पालिर्यदा दीर्घा स्यात्तदा बाह्यसन्धिर्विधेय इति; बाह्याया गण्डाद्दूरवर्तिन्या पाल्या दीर्घायां, आभ्यन्तरो गण्डसन्निकृष्टो गण्डसश्रयी वेत्यर्थः । कपाटसन्धिकार्धकपाटसन्धिकयोरेवेदं संधानसूत्रं न तु व्यायोजिमस्येत्यन्ये ॥ १२ ॥

**एकैव तु भवेत् पालिः स्थूला पृथ्वी स्थिरा च या ॥**
**तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् १३**

इदानीमासङ्गिमस्य संधानसूत्रमाह,—एकैवेत्यादि । वल्लूरकस्येदं संधानसूत्रं संभाव्यत इत्यन्ये वदन्ति ॥ १३ ॥

**गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता ॥**
**कर्णपालीमपालेस्तु कुर्यान्निर्लिख्य शास्त्रवित् १४**

आहार्यस्य सन्धिसूत्रं निर्देष्टुमाह,—गण्डादुत्पाट्य मासेनेत्यादि । सानुबन्धेनेति गण्डप्रदेशलग्नेनेत्यर्थः । जीवतेति शोणितसहितेनेत्यर्थः । अन्ये तु गण्डकर्णस्याप्येतत् संधानसूत्रमिति वदन्ति ॥ १४ ॥

**अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसंभृतसंभारं विशेषतश्चात्रोपहरेत् सुरामण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णं चेति । ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघु भुक्तवन्तमाप्तैः सुपरिगृहीतं च कृत्वा बन्धमुपधार्य छेद्यभेद्यलेख्यव्यधनैरुपपन्नैरुपपाद्य कर्णशोणितमवेक्ष्य[1] दुष्टमदुष्टं वेति; तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे शीतोदकपयोभ्यां श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ, पुनरवलिख्यानुन्नतमहीनमविषमं च कर्णसन्धिं सन्निवेश्य, स्थितरक्तं सन्दध्यात् । ततो मधुघृतेनाभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमनतिशिथिलं च बद्ध्वा कपालचूर्णेनावकीर्याचारिकमुपदिशेद्द्विव्रणीयोक्तेन च विधानेनोपचरेत् ॥ १५ ॥**

अतःपरं बन्धविधि । अग्रोपहरणीयोक्तोपसंभृतसंभारमिति अग्रोपहरणीयोक्तो यन्त्रशस्त्रादिरूप समीपे संभृत· सम्यक्कृत्वा धृतः संभार· समूहो यत्र । सुरामण्डं मद्यस्योपर्यच्छभागं, कपालचूर्णं नवमृन्मयभाण्डखण्डचूर्णम् । ततोऽङ्गना पुरुषं वेति अङ्गनाया भूषणप्राधान्यात् प्राङ्निर्देश· । ग्रथितकेशान्तमिति ग्रथितकेशावयवं, अन्यथा केशव्याकुलतया कर्माभिघात· स्याद्बन्धविश्लेषो वा । लघुभुक्तवन्तमिति भुक्तवान् शस्त्रकर्मपीडां सहते, आहारलघुत्वाद्वेदनया रात्रिजागरितवतोऽपि नाजीर्णबाधा स्यात् । आप्तै· सुपरिगृहीतं च कृत्वेति आप्तैर्हितैः । बन्धमुपधार्येति अयं बन्धोऽत्र कर्तव्य इति निश्चित्य । छेद्यादैरुपपन्नैरिति युक्तै । उपपाद्येति सयोज्य, सन्निवेश्य आरोप्य, सदध्यात् संधानं कुर्यात् । पिचुप्लोतयोरिति तूलकर्पटयोरित्यर्थ· । अवगुण्ठ्येति आवेष्ट्य । आचारिकमिति आहारविहाराख्यम् । द्विव्रणीयोक्तेन च विधानेनेति आलेपनादिना ॥ १५ ॥

भवति चात्र ।

**विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम् ॥**
**व्यवायमग्निसंतापं वाक्श्रमं च विवर्जयेत् ॥१६॥**
**( आमतैलपरीषेकं त्रिरात्रमवचारयेत् ।**
**ततस्तैलेन संसृष्टं त्र्यहादपनयेत् पिचुम् ॥१॥ )**

परिहार्याण्युपदिशन्नाह,—विघट्टनमित्यादि । विघट्टनं चालनम् ॥ १६ ॥

**न चाशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा संदध्यात् । स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्, पित्तदुष्टे दाहपाकरागवेदनावान्, श्लेष्मदुष्टे स्तब्धः कण्डूमान्, अतिप्रवृत्तरक्ते श्यावशोफवान्; क्षीणोऽल्पमांसो न वृद्धिमुपैति ॥ १७ ॥**

परिहार्यसामान्यादन्यदपि विरुद्धं प्रतिपादयन्नाह,—न चेत्यादि । अशुद्धरक्तमिति दुष्टरक्तं, अतिप्रवृत्तरक्तमिति शुद्ध-

१ 'अग्रोपहरणीयोक्तसभारमुपहरेद्विशेषतश्चात्र सुरामण्ड' पा० ।

[1] 'अवेक्षेत तद्दुष्टमदुष्ट वेति' पा० ।

रक्तमपि यदाऽतिप्रवृत्तं स्यात्तदा न सन्धेयम्। अशुद्धरक्तसन्धाने दोषमाह,—स हि वातदुष्ट इति। परिपुटनं त्वच उचटनं, मिश्रकाध्यायोक्त सशोफः कर्णलतिकारोगो वा। अतिप्रवृत्तरक्तस्य सन्धाने दोषमाह,—अतिप्रवृत्तरक्त इति, अतिस्रवद्रक्त इत्यर्थः। श्यावशोफोऽत्र वातकृतः। क्षीणकर्णस्य सधाने दोषमाह,—क्षीणोऽल्पमास इति। क्षीणोऽत्र शुद्धरक्तातिप्रवृत्त्या; न तु दोषोपद्रवैः, सदोषोपद्रववर्धने छिद्यत एव॥ १७॥

**आमतैलेन त्रिरात्रं परिषेचयेत्, त्रिरात्राच्च पिचुं परिवर्तयेत्। स यदा सुरूढो निरुपद्रवः सवर्णो भवति तदैनं शनैश्शनैरभिवर्धयेत्। अतोऽन्यथा संरम्भदाहपाकरागवेदनावान्, पुनश्छिद्यते वा १८**

**अथास्याप्रदुष्टस्याभिवर्धनार्थमभ्यङ्गः। तद्यथा,—गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयः सर्पिस्तैलं गौरसर्षपजं च यथालाभं संभृत्यार्कालर्कबलातिबलानन्तापामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गपयस्याप्रतिवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात्॥ १९॥**

छिन्नमणीयोक्तसामान्यविधिमुद्दिश्य विशेषविधिं निर्दिशन्नाह,—आमतैलेनेत्यादि। प्रतुदाः लट्वादयः श्रेष्ठत्वात्, विष्किरा लावादयः, आनूपा वराहमहिषादयः, औदका रोहितमत्स्यादयः, एषां वसामज्जानौ, वसा मांसस्नेहः। गौरसर्षपजस्थाने राजसर्षपजमिति केचित् पठन्ति, राजसर्षपा श्वेतसर्षपाः। वसामज्जासर्पिर्गौरसर्षपतैलमेतत्स्नेहचतुष्टयमर्कादिकल्कमावाप्य चतुर्गुणेन दुग्धेनैव पचनीयमिति। अन्ये त्वत्र सर्पिर्न पठन्ति। अपरे वसादिस्नेहचतुष्टयं पर पठन्ति, नतु पयः। द्रवानुक्तौ च जलं चतुर्गुणं वदन्ति स्नेहपाके, यदाऽन्यत्रापि केवलं दुग्धं स्यात्तदा स्नेहाच्चतुर्गुणं दुग्धं, यदा पुनरन्योऽपि द्रवो भवेत्तदा स्नेहसममेव दुग्धं कार्यमित्याचार्या भाषन्ते। यथालाभं सम्भृत्येति यस्य यस्य लाभस्तं तमेकत्र कृत्वेत्यर्थः, एतेन द्वित्राणामपि ग्रहणमुक्तम्। अलर्को मन्दारः, अनन्ता उत्पलसारिवा, विदारिगन्धा शालपर्णी, क्षीरशुक्ला क्षीरविदारी; जलशूको जलनीलिका, जलान्तर्वर्ती रोमयुक्त सविषप्राणी वा, जलशूको जलसंस्थस्तृणसक्तो जन्तुविरचितः शूकसघातवान् निवासान्दुक इत्यन्ये, जलचारी कृष्णकीट इति लक्ष्मणटीप्पणकेनोक्तं, मधुरवर्गः काकोल्यादिः, पयस्या विदारीभेदः, केचिदर्कपुष्पीत्याहु, अन्ये मधुरवर्गं पयस्यां च न पठन्ति। तैलं वेति तिलतैलं वा पचेत्, एकैकम्। स्वनुगुप्तमिति निरुपद्रवस्थान इत्यर्थः॥ १८॥ १९॥

**स्वेदितोन्मर्दितं कर्णं स्नेहेनैतेन योजयेत्॥**
**अथानुपद्रवः सम्यग्बलवांश्च विवर्धते॥ २०॥**

अस्य तैलस्यावचारणमाह,—स्वेदितोन्मर्दितमित्यादि॥ २०॥

**यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्तनं हितम्॥**

अभ्यक्तस्योद्वर्तनमाह,—यवेत्यादि॥—

**शतावर्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः॥ २१॥**
**तैलं विपक्वं सक्षीरमभ्यङ्गात् पालिवर्धनम्॥**

कर्णपालिविवृद्ध्यर्थमपरं तैलमाह,—शतावर्यश्वगन्धाभ्यामित्यादि। शतावर्यादिकल्केन स्नेहचतुर्थांशेन केवलक्षीरेण चतुर्गुणेन तैलमत्र पचनीयम्। पयस्या अर्कपुष्पी। जीवनं काकोल्यादिद्रव्यं॥ २१॥—

**ये तु कर्णा न वर्धन्ते स्वेदस्नेहोपपादिताः[१]॥ २२॥**
**तेषामपाङ्गदेशे तु कुर्यात् प्रच्छानमेव तु॥**
**बाह्यच्छेदं न कुर्वीत व्यापदः स्युस्ततो ध्रुवाः॥२३॥[२]**

एवमप्यवर्धमानानां कर्णानां वर्धनोपायं दर्शयन्नाह,—ये त्वित्यादि। उपपादिता सयोजिता। अपाङ्गदेशे त्विति कर्णपुत्रिकाया अधस्तिर्यक्। तुशब्द एवार्थः। प्रच्छानमेव त्विति प्रशब्द ईषदर्थे, ईषच्छेदनं; तुशब्दोऽयमप्यर्थ, तेन कर्णपुत्रिकाया अध एव छेदनं, तदपीषदेव कार्यमित्युक्तं भवति। 'तेषामपाङ्गच्छेदं हि कार्यमाभ्यन्तरं भवेत्' इति केचित् पठन्ति, अपाङ्गपुत्रिकाया अधः कर्णानुकूलमाभ्यन्तरं छेदं प्रच्छयेद्वा। बाह्यच्छेदं कर्णबाह्यलतिकाच्छेदम्। व्यापद कर्णलतिकात्रुटनादय, 'व्याधयः स्यु' इत्यन्ये पठन्ति॥ २२॥ २३॥

**बद्धमात्रं तु यः कर्णं सहसैवाभिवर्धयेत्॥**
**आमकोशी समाध्मातः क्षिप्रमेव विमुच्यते॥२४॥**

आरूढकर्णस्य वर्धने दोषमाह,—बद्धमात्रमित्यादि। आमकोशीति असम्यग्रूढमध्यः। केचिदमुं न पठन्ति॥ २४॥

**जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः॥**
**सुरूढोऽवेदनो यश्च तं कर्णं वर्धयेच्छनैः॥ २५॥**

कीदृश पुनर्वर्धनीयस्तमाह,—जातरोमेत्यादि। सुवर्त्मेति शोभनच्छिद्र, श्लिष्टसन्धिः सलग्नसन्धि, समो निम्नोन्नतलरहित, स्थिरो दृढ॥ २५॥

**अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह॥**
**यो यथा सुविशिष्टः स्यात्तं तथा विनियोजयेत्॥**
**(कर्णपाल्यामयान्नृणां पुनर्वक्ष्यामि सुश्रुत!॥**
**कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः॥ १॥**
**द्विधा वाऽप्यथ संसृष्टाः कुर्वन्ति विविधा रुजः॥**
**विस्फोटः स्तब्धता शोफः पाल्यां दोषे तु वातिके॥२**
**दाहविस्फोटजननं शोफः पाकश्च पैत्तिके॥**
**कण्डूः सश्वयथुः स्तम्भो गुरुत्वं च कफात्मके॥३॥**

---

१ 'विधिनाऽनेन योजिताः' इति पा०।

२ 'अपाङ्गदेशे नेत्रपुच्छान्ते, प्रच्छानं त्वङ्मात्रावकर्तनमेव कुर्यान्न त्वधिकमित्येवकारेणाक्षिप्तमर्थं पुनः स्फुटीकुर्वन्नवगमयति—बाह्येत्यादिना। बाह्यशब्देनेह प्रायस्त्वङ्मात्रान्तरिततत्वेन नातिगम्भीरमपाङ्गाख्य ममवाभिप्रेयत इति गम्यते, व्यापदस्तु ततो ध्रुवा इत्युक्तेः, तत्र तदन्तरेण किञ्चन व्यापत्तिकरं नोपलभामहे' हाराणचन्द्रः।

भवन्ति चात्र ।

**सर्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम् ॥**

सर्वेष्वेवानुपानेषु तोयस्य प्राधान्यं दर्शयन्नाह,—सर्वेषामित्यादि । माहेन्द्रतोयमान्तरिक्षमुदकम् ॥—

**सात्म्यं वा यस्य यत्तोयं तत्तस्मै हितमुच्यते ॥४३३॥**

शेषमपि भौममुदकं नियमयन्नाह,—सात्म्यं वेत्यादि । यत्तोयमिति नदीनदसरस्तडागाद्युदकमित्यर्थः ॥ ४३३ ॥

**उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥**

उष्णशीतभेदेनानुपानमाह,—उष्णमित्यादि ॥—

**दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा ॥ ४३४ ॥**
**यथोक्तेनानुपानेन सुखमन्नं प्रजीर्यति ॥**
**रोचनं बृंहणं वृष्यं दोषसंघातभेदनम् ॥ ४३५ ॥**
**तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥**
**दीपनं दोषशमनं पिपासाच्छेदनं परम् ॥ ४३६ ॥**
**बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥**

सर्वेषामेवानुपानानामुक्तानां गुणं निर्दिशन्नाह,—दोषवदित्यादि । दोषवदिति वातादिदोषकरम् । सुखमिति अदोषमित्यर्थः । दोषसंघातभेदनं दोषसमूहपृथक्करणं, तर्पणं तृप्तिजनकं, मार्दवकरं शरीरकोमलतोत्पादकं, सुखं स्वास्थ्योत्पादकं, दोषशमनं वातादिशमनं, पिपासाच्छेदनं पिपासाविनाशकं, परमतिशयेन, सदोच्यत इति एवंविधमनुपानं सर्वदा कथ्यते, अन्ये दोषवदित्याद्यनुपानस्य फलं, रोचनमित्यादयस्तु सामान्यानुपानगुणा इत्याहुः ॥ ४३४—४३६ ॥—

**तदादौ कर्शयेत्पीतं स्थापयेन्मध्यसेवितम् ॥ ४३७ ॥**
**पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥**

तदनुपानं भोजनादिमध्यान्तविभागेन गुणविशेषं करोतीति दर्शयन्नाह—तदादावित्यादि । तदनुपानं, आदौ भोजनस्य, कर्शयेदतिशयेन शरीरस्य कृशत्वमापादयेत्, स्थापयेत् न कर्शयति नापि स्थूलयत्यपि तु मध्यं करोतीत्यर्थः । पश्चात् पीतं बृंहयति पुष्टिमापादयति, तस्माद्वीक्ष्य प्रयोजयेदिति कार्श्यमिच्छन्नादौ, मध्यवपुरिच्छन् मध्य एव, पुष्टिमिच्छन्नन्त इति । अनुपानमिति अनुशब्दं लक्ष्यार्थमाहुः, आहारं लक्षीकृत्य पानमिति, आहारमाश्रित्य यत्पीयत इत्यर्थः, तेन मध्याद्ययोरप्यनुपानशब्दः प्रयुक्तो भवति ॥ ४३७ ॥—

**स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ॥ ४३८ ॥**
**भवत्याबाधजननमनुपानमतः पिबेत् ॥**

अनुपानव्यतिरेके दोषं दर्शयन्नाह,—स्थिरतामित्यादि । स्थिरतामचलतां, अक्लिन्नं शुष्कमित्यर्थः, अद्रवपायिनामनुपानमपिबतां, आबाधजननं पीडाकरम् ॥ ४३८ ॥

**न पिबेच्छ्वासकासार्तो रोगे चाप्यूर्ध्वजत्रुगे ॥४३९॥**
**क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥**

कस्यचित् पुरुषविशेषस्यानुपाननिषेधमाह,—न पिबेदित्यादि । आर्तः पीडितः, ऊर्ध्वजत्रुगे इति जत्रुर्ग्रीवामूलं तस्योर्ध्वभागे, क्षतोरस्क इति उरःक्षतरोगवानित्यर्थः, प्रसेकी लालास्रावी, उपहत इति वातादिभिरित्यर्थः ॥ ४३९ ॥

**पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत् ॥४४०॥**
**प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ॥**
**स्यन्दाग्निसादच्छर्द्यादीनामयाञ्जनयेद्बहून् ॥ ४४१ ॥**

अनुपाने पीते सति यद्वर्जनीयं तदाह,—पीत्वेत्यादि । अध्वा मार्गः, भाष्यं बहुभाषणं, अध्ययनं पठनं, गेयं गीतं, न शीलयेदिति न सेवेतेत्यर्थः । कस्मादेतान्न शीलयेदित्याह,—प्रदूष्येत्यादि । प्रदूष्य वातादीनां प्रकोपं कृत्वा । तद्धीति तदनुपानं, हि यस्मादर्थे । तस्य पुरुषस्य, स्यन्दं श्लेष्मस्रवणम् ॥ ४४०—४४१ ॥

**गुरुलाघवचिन्तेयं स्वभावं नातिवर्तते ॥**
**तथा संस्कारमात्रान्नकालांश्चाप्युत्तरोत्तरम् ॥४४२॥**

गुरुलाघवस्य द्रव्यरसवीर्यविपाकाश्रयस्य च शरीरादिभेदेनोक्तस्य यथास्वातिशयेन व्यवस्थां कुर्वन्नाह—गुर्वित्यादि । नातिवर्तते न त्यजति । जङ्घाला जाङ्गलचारिणः कुतो लघव इत्युक्तेऽवश्यमेव स्वभावो वाच्यः, एवं शरीरधात्ववयवादिष्वपि वाच्यं; तथा संस्कारं नातिवर्तते, यथा—स्वभावाद्गुरोरपि व्रीहेर्लाजा लघवः, लघोरपि शालेः संस्कारात् पिष्टमेव गुरु, तथा मात्रां नातिवर्तते, यथा—"गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते"—इति, अन्नं च नातिवर्तते, तद्यथा—मण्डपेयाविलेपीभक्तापूपादि यथोत्तरं गुरु, यथापूर्वं लघ्विति, कालं च नातिवर्तते, यथा—"नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्"—इति । उत्तरोत्तरमिति स्वभावात् संस्कारं, संस्कारान्मात्रां, मात्रातोऽन्नं, अन्नात्कालं, गुरुलाघवचिन्ता नातिवर्तेत इत्यर्थः, चकारादिहापि चराद्याश्चानुक्ता अपि समुच्चीयन्ते ॥ ४४२ ॥

**मन्दकर्मानलारोग्याः सुकुमाराः सुखोचिताः ॥**
**जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्यते ॥४४३॥**

इयं गुरुलाघवचिन्ता विशिष्टपुरुषाश्रयेति ज्ञापनायाह,—मन्दकर्मेत्यादि । मन्दकर्माणोऽलसाः, मन्दानला मन्दाग्नयः, मन्दारोग्या रोगिणः, सुकुमारा मृदुदेहाः, सुखोचिताः सुखिनः, जन्तवः प्राणिनः, चिन्तेयमिति गुरुलाघवलक्षणा, परिकीर्त्यते कथ्यत इत्यर्थः ॥ ४४३ ॥

**बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः ॥**
**कर्मनित्याश्च ये तेषां नावश्यं परिकीर्त्यते ॥ ४४४ ॥**

**इति सर्वानुपानवर्गः ।**

यान् प्रति नेयं चिन्ता तानपि दर्शयन्नाह,—बलिन इत्यादि । बलिनः शक्त्युपचययुक्ताः, एतेनैवारोग्यमुक्तं, खरभक्ष्या अमृदुभोजनाः, कर्मनित्याः सदा कर्मकारिणः । परिकीर्त्यत इति गुरुलाघवचिन्तेयमिति शेषः । इति सर्वानुपानवर्गः ॥ ४४४ ॥

**अथाहारविधिं वत्स ! विस्तरेणाखिलं शृणु ॥**

अथाहारविधिमाह,—अथेत्यादि । अखिलं समस्तं, शृणु आकर्णय ॥—

**आप्तास्थि(न्वि)तमसंकीर्णं शुचि कार्यं महानसम् ४५**

पाकस्थानं कीदृक्कार्यमित्याह,—आप्तान्वितमित्यादि । आप्ता अव्यभिचारिणः, तैरास्थितमाश्रितं, असंकीर्णमसंकटं, महानसमिति पाकस्थानं, रसवतीति लोके ॥ ४४५ ॥

**तत्राप्तैर्गुणसंपन्नमन्नं भक्ष्यं सुसंस्कृतम् ॥**
**शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥ ४४६ ॥**

सुसंस्कृतस्यान्नस्य स्थानमाह,—तत्रेत्यादि । आप्तैः सुसंस्कृतमिति संबन्धः । गुणसंपन्नमिति गुणसंपन्नमिष्टरसगन्धस्पर्शवर्णोपेतं, भक्ष्यमन्नमभ्यवहरणीयं, सुसंगुप्तमतिशयेनादृश्यं, समुपस्थापयेत् निवेशयेत् शुचौ देश इति संबन्धः, भिषक् वैद्यः ॥ ४४६ ॥

**विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ॥**
**सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥ ४४७ ॥**

तस्याहारस्यैवंगुणस्य दूषणकरविषनाशनं निर्दिशन्नाह,—विषघ्नैरित्यादि । विषघ्नैर्विषहारिभिः, अगदैरौषधैः, स्पृष्टं छुप्तं, प्रोक्षितं व्यजनोदकैरिति अथर्वमन्त्रैरभिमन्त्रितं, अन्ये तु व्यजनोदकैरित्यगदस्यैव विशेषणं कथयन्ति, तेषां मतेऽगदोदकक्षालितव्यजनैर्वीजितमविषीभवत्यन्नम् । तन्त्रमभिधाय मन्त्रमपि निर्दिशन्नाह,—सिद्धैरित्यादि । सिद्धैरव्यभिचारिभिः, कुरुकुल्लाफेरण्डप्रभृतिभिर्हतविषमन्नमिति संबन्धः । निवेदयेत् 'नृपतये' इति शेषः ॥ ४४७ ॥

**वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम् ॥**
**घृतं कार्ष्णायसे देयं पेया देया तु राजते ॥ ४४८ ॥**
**फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै दलेषु च ॥**
**परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥ ४४९ ॥**
**प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥**
**कट्वराणि खडांश्चैव सर्वान् शैलेषु दापयेत् ॥ ४५० ॥**
**दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः ॥**
**पानीयं, पानकं मद्यं मृन्मयेषु प्रदापयेत् ॥ ४५१ ॥**
**काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ॥**
**दद्याद्वैदूर्यचित्रेषु रागषाडवसट्टकान् ॥ ४५२ ॥**
**पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ॥**
**सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥४५३॥**
**फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥**
**तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥४५४॥**
**प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ॥**
**खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥४५५॥**
**सर्वान् गुडविकारांश्च रागषाडवसट्टकान् ॥**
**पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ॥४५६॥**

वक्ष्यामीत्यादि । कृत्स्नां समस्तां, उपकल्पनां समीपढौकनाम् । आधारापेक्षणीयमेव प्रथमं कल्पनं निर्दिशन्नाह—घृतमित्यादि । कार्ष्णायसे कृष्णलोहपात्रे, कान्तलोहपात्रे इत्यन्ये । राजते रौप्यमये । भक्ष्या लड्डुकादयः । वैशब्दः पादपूरणे, दलेषु पत्रेषु, अन्ये तु वैदलेषु वेत्रवंशादित्वग्ग्रथितेषु पर्णमयेष्विति मन्यन्ते । परिशुष्केत्यादि ।—"सिक्तं बहुघृते भृष्टं मुहुरुष्णाम्बुना मृदु । जीरकाद्यैर्घनं मांसं परिशुष्कं तदुच्यते ॥ तदेव गोरसादानं प्रदिग्धमिति विश्रुतम्"—। प्रद्रवाणि प्रकृष्टद्रवाणि मण्डादीनि, रसो मांसरसः, उपहारयेद्दद्यात् । कट्वरं तक्रं, अन्ये तु,—"सौवीराम्लमथाम्लं काञ्जिकं कट्वरं विदुः । अन्ये तु तदधोभागं तक्रं वा ह्यम्लतां गतम् ॥ सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम्"—इति । खडो यूषविशेषः सतक्रशमीधान्यः सतक्रशाकश्च । शैलेषु पाषाणमयेषु । दद्यादित्यादि । पयो जलम् । पानकमित्यादि । मृन्मयेषु मृत्तिकामयेषु शरावादिषु । काचेत्यादि । शुभेषु भव्येषु, वैदूर्यं रत्नविशेषः, चित्रेषु विचित्रेषु । तत्र रागः "सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः"—इति । षाडवाः पुनर्मधुराम्ललवणसंयोगजा नानाविधाः, विशेषतः सूदेभ्यो ज्ञेयाः । सट्टकस्तु "लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितम् । दाडिमीबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् ॥ सट्टकं तु प्रमोदाख्यं नलादिभिरुदाहृतम्"—इति । 'दद्याद्वैदूर्यचित्रेषु' इत्यस्य स्थाने 'वज्रवैदूर्यचित्रेषु' इति केचित् पठन्ति, तत्र वज्रं शतकोटिकं रत्नं हीरक इत्यर्थः । एष्वाधारेषु दीयमानानामेषां हितकारित्वम् । आधारविशेषमभिधाय देशविशेषेणाहारविशेषं दर्शयन्नाह,—पुरस्तादित्यादि । पुरस्तादग्रतः, पुरौदनं हि ग्रहणसौकर्यात् । पात्रे स्थाल्यादिके । सुविस्तीर्णे बहुले । मनोरमे रुचिजनके । सूदः सूपकारः । सूपसहितमोदनं भक्तम् । प्रदेहान् प्रलेहान् । परिशुष्काणि पूर्ववत् । दक्षिणपार्श्वे दक्षिणभागे, भुञ्जानस्य भोजनं कुर्वतः, उपकल्पयेत् समीपं ढौकयेत् । प्रद्रवाणीति प्रद्रवादयः पूर्ववत् । सव्ये पार्श्वे वामभागे । रागषाडवसट्टकाः पूर्ववत्, पुरस्तादग्रत इत्यर्थः । न केवलं पुरस्तात्, द्वयोरपि च मध्यतः द्वयोः पक्षयोर्मध्ये एकस्मिन् पक्षे दद्यात् । एतेन सर्वत्र दातव्यमित्युक्तं भवति ॥ ४४८—४५६ ॥

**एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ॥**
**भोक्तारं विजने रम्ये निःसंपाते शुभे शुचौ ॥४५७॥**
**सुगन्धपुष्परचिते समे देशेऽथ भोजयेत् ॥**

एवमित्यादि । एवमुक्तप्रकारेण भोजनस्योपकल्पनां विज्ञाय भोक्तारं च विज्ञायेति संबन्धः । विजने एकान्ते, विजने हि भुञ्जानस्य दुष्टदृष्टिनिपातादिदोषो न भवति । रम्ये मनोहरे । निःसंपाते उल्लोचसहिते, तत्र भुञ्जानस्य पांशुप्रक्षेपादिदोषो न भवति । शुभे वास्तुदोषरहिते । शुचौ पवित्रे, तत्र न भूताद्यावेगः । समे निम्नोन्नतत्वरहिते ॥ ४५७ ॥—

१ 'निःसंबाधे' इति पा० ।

**विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ॥४५८॥**
**मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥**

कीदृगशनं हितमित्याह,—विशिष्टमित्यादि । विशिष्टं श्रेष्ठं, कैः कृत्वा? इष्टसंस्कारैः । पथ्यैरिष्टै रसादिभिरिति पथ्यैर्हितैः, इष्टैः प्रियैः, आदिशब्दाद्गन्धवर्णस्पर्शा गृह्यन्ते । प्रत्यग्रमभिनवम्, अशनं भोजनम् ॥ ४५८ ॥—

**पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ ॥ ४५९ ॥**
**पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥**
**आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान् ॥४६०**
**ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम् ॥**
**घनं पूर्वं समश्नीयात् केचिदाहुर्विपर्ययम् ॥ ४६१ ॥**
**आदावन्ते च मध्ये च भोजनस्य तु शस्यते ॥**
**निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥ ४६२ ॥**
**मृणालबिसशालूककन्देक्षुप्रभृतीनि च ॥**
**पूर्वं योज्यानि भिषजा न तु भुक्ते कदाचन ॥४६३॥**

कालभेदेनाप्याहारविधिं निर्दिशन्नाह,—पूर्वमित्यादि । बुभुक्षिते पुरुषे वातपित्तप्रशमनाय प्रथमं मधुरो रसः पक्वाशयगतं वायुं जयति, अम्ललवणौ मध्यभोजनस्थौ पित्ताशयेऽग्निदीप्तिं कुरुतः, अन्ते कफजयाय कट्वादयः । आदाविति आदौ फलानि भुञ्जीत, वातजयार्थं दाडिमाद्यम्लोपयोगः, आदाविति मतान्तरे इत्यन्ये । ततः पेयान् पातव्यान् दाडिमादिकठिनाहारमृदुकरणार्थं वयःस्थापनार्थं च, ततो भोज्यं रक्तशाल्यादि, चित्रान् नानाप्रकारान् । घनमिति घनं भोज्यं भक्ष्यादि कठिनं, विपर्ययमुक्तविपर्ययं, पूर्वं द्रवं पश्चात् कठिनमिति । 'घृतं पूर्वं समश्नीयात्' इति केचित् पठन्ति । अम्लफलस्यादावेव नियतस्य कस्यचिदेव फलस्यादिमध्यान्तेषु प्रयोगं दर्शयन्नाह,—आदावित्यादि । निरत्ययमबाधम् । मृणालं पद्मनालं, बिसं बिसण्डकं, शालूकं प्रसिद्धम् ॥ ४५९—४६३ ॥

**सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः ॥**
**काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम् ४६४**
**बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः ॥**

भुञ्जानः कथं भुञ्जीतेत्याह,—सुखमुच्चैरित्यादि । समासीन इति सम्यगासीन उपविष्टः । अन्नतत्पर इति न कामादिव्यग्रमनाः । भुञ्जानः किम्भूतः कदा कीदृशं भुञ्जीतेत्याह,—काले सात्म्यमित्यादि । कालो द्विविधो नियत आवस्थिकश्च; तत्र नियत आर्तवः, स पुनः 'अतीवायतयामा' इत्यादिना नियमितः ; आवस्थिकः पुनर्जीर्णलक्षणापेक्षः, आमे त्वन्नेऽकालः । सात्म्यं देशामयादिभेदेनानेकविधं, असात्म्यं पुनर्दोषकारि । क्षिप्रं नातिद्रुतं नातिविलम्बितं, अतिद्रुतातिविलम्बितयोर्दोषकारित्वात् । द्रवोत्तरं द्रवप्रधानम् । बुभुक्षितग्रहणमकालबुभुक्षानिषेधाय, वक्ष्यति च,—"भवत्यकालेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति"—इति । मात्रालक्षणमाह,—"अपीडनं भवेत् कुक्षेः पार्श्वयोरविपाटनम् । अनेन हृदयाबाधो जठरस्य तु गौरवम् ॥ प्रीणनं चक्षुरादीनां शमनं क्षुत्पिपासयोः । उच्छ्वासश्वासहास्यादिकथासु सुखवर्तनम् ॥ सुखेन परिणामः स्यादन्ने भुक्ते दिवानिशि"—इति । विदितागम इति द्वेयोपादेयविवेकार्थं विदितं हिताहितं येन स विदितागमः ॥ ४६४ ॥—

**काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते ॥४६५॥**
**लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ॥**
**क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् ॥ ४६६ ॥**
**सुखं जीर्यति मात्रावद्धातुसाम्यं करोति च ॥**

एषां कालादिभोजनानां फलानुगमं दर्शयन्नाह,—काले भुक्तमित्यादि । प्रीणयति तृप्तिं जनयति, सात्म्यमन्नं भुक्तं न बाधते न पीडां जनयति । लघ्वित्यादि लघ्वन्नं भुक्तमिति सबन्धः । स्निग्धोष्णं बलवह्निदमिति स्निग्धं बलप्रदं, उष्णं वह्निप्रदमित्यर्थः । क्षिप्रमित्यादि । सममेककालम् । अदोषं द्रवोत्तरमिति द्रवोत्तरमन्नं भुक्तं सददोषं दोषरहितं पाकं याति । सुखमित्यादि मात्रावदन्नं भुक्तं सुखेन पाकं गच्छति धातुसाम्यं च करोति, धातुशब्दोऽयं दोषधातुमलेषु वर्तते ॥४६५—४६६—

**अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः ॥४६७॥**
**तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ॥**
**येषु चापि भवेयुश्च दिवसा भृशमायताः ॥ ४६८ ॥**
**तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥**
**रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ॥४६९॥**
**कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥**

आर्तवलक्षणं कालमाह,—अतीवायतयामा इत्यादि । अतीवायतयामा अतीव दीर्घप्रहराः, क्षपा रजन्यः, येष्वृतुष्विति हेमन्ते शिशिरे च । तत्प्रत्यनीकाढ्यमिति कालबलप्रवृत्तदोषगुणानां बाधकभूतं विरोधिद्रव्यगुणबहुलमित्यर्थः । प्रातरिति सपादे यामे । येष्विति येष्वृतुषु ग्रीष्मप्रावृषोः, भृशमायता दीर्घतराः, तत्कालविहितं द्रवस्निग्धमधुरप्रायं, अपराह्ण इति अर्धतृतीययामोपरि । रजन्य इत्यादि येष्वृतुषु शरदि वसन्ते च । सममहोरात्रं मध्याह्न इत्यर्थः, अयमेकाशनस्य पुरुषस्य विधिः; द्विरश्नतः पुनः प्रातर्भोजनमात्राया अर्धमात्रं त्रिभागं वा लघु मृष्टं च, तच्च प्रातर्भोजनं सपादे प्रहरे, द्वितीयं भोजनं त्वर्धचतुर्थप्रहरोपरीति पञ्जिकाकारः; जेज्झटस्तु सत्रिभागे प्रहरे दिवसस्य रात्रेश्च सत्रिभागप्रहरे भुञ्जानस्य रजनीदिवसयोः समत्वं भवतीत्याह । अयमार्तवकाल उक्तः । आवस्थिकः पुनः स्वास्थ्यवृत्तिकेऽध्याये दशौषधकालानभिधाय वक्ष्यति ॥ ४६७—॥ ४६९ ॥—

**नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ॥४७०॥**
**अप्राप्तकालं भुञ्जानः शरीरे ह्यलघौ नरः ॥**
**तांस्तान् व्याधीनवाप्नोति मरणं वा नि(वि)यच्छति ॥**

अतीतकालं भुञ्जानो वायुनोपहतेऽनले ॥
कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति ॥४७२॥
हीनमात्रमसन्तोषं करोति च बलक्षयम् ॥
आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥४७३॥

कालमात्रावतो विपर्ययमकालमात्रावत्त्वं निर्दिशन्नाह,—नाप्राप्तेत्यादि । अप्राप्तकालमतीतकालं वा न भुञ्जीतेत्यर्थः । हीनाधिकमिति हीनमात्रमधिकमात्रं वा न भुञ्जीत । तयोरप्राप्तातीतकालयोरधिकन्यूनयोश्च दोषं दर्शयन्नाह,—अप्राप्तकालमित्यादि । अप्राप्तकालं भुञ्जानो नरः शरीरेऽलघौ सति तांस्तान् शिरोरुजादीन् व्याधीन् नियच्छति प्राप्नोति । अतीतकालमित्यादि । असन्तोषमसंतृप्तिम् । आटोप उदरस्याध्मानं, सादोऽङ्गग्लानिः । अधिकमिति अधिकमन्नं भुक्तमित्यर्थः ॥ ४७०—४७३ ॥

तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ॥
यथोक्तगुणसंपन्नमुपसेवेत भोजनम् ॥ ४७४ ॥
विभज्य दोषकालादीन् कालयोरुभयोरपि ॥

कीदृक् पुनरन्नं सेवितव्यमित्याह—तस्मादित्यादि । युक्त्या मात्रया । कालयोरुभयोरपि प्रातः सायं च ॥ ४७४ ॥—

अचोक्षं दुष्टमुत्सृष्टं पाषाणतृणलोष्टवत् ॥ ४७५ ॥
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् ॥
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ॥ ४७६ ॥
अशान्तमुपदग्धं च तथा स्वादु न लक्ष्यते ॥

सात्म्याद्युपादेयं प्रदर्श्य हेयं प्रदर्शयन्नाह—अचोक्षमित्यादि । अचोक्षमपवित्रं, मलिनमित्यन्ये । दुष्टं विषादिभिर्दोषकरत्वात् । उत्सृष्टं भुक्तोत्सृष्टम् । पाषाणतृणलोष्टवदिति पाषाणादियुक्तमित्यर्थः । द्विष्टं मन प्रतिघाति । व्युषितं विशेषेणोषितम् । पूति शटित, पूति चान्नमिति चकारादत्र शत्रुगणगणिकादीनामप्यन्नं वाह्यदूषणान्वित वर्जनीयमिति समुच्चीयते । अस्वाद्वन्नं पूर्वं वर्जनीयमुक्तमिति तद्भेदानाह—चिरसिद्धमित्यादि । स्थिर कठिनम् । अशान्तं किंचिदवशिष्टविस्रावणम् । उपदग्धमिति अतिपाकित्वेन ज्वलितम् । चकारेण दु.सिद्धमपि समुच्चीयते । तथा स्वादु न लक्ष्यत इति यदन्न स्वादु न लक्ष्यते तदपि वर्जयेदिति सवन्ध ॥ ४७५ ॥ ४७६ ॥—

यद्यत् स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम् ॥ ४७७ ॥

अन्नेषु स्वादुषु सत्सु विधानं दर्शयन्नाह,—यदित्यादि । स्वादुशब्दः सस्कृते रसे वर्तते, न तु मधुरार्थके एव । विदध्यात् दद्यात्; कथं? उत्तरोत्तरमेकस्मिन् स्वादुनि दत्ते सति तस्मादधिकतरस्वादु दद्यात्, तस्मिन्नपि दत्ते तस्मादधिकतरस्वादु दद्यादित्यर्थ ॥ ४७७ ॥

प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः ॥
विशुद्धरसने तस्मै रोचतेऽन्नमपूर्ववत् ॥ ४७८ ॥
स्वादुना तस्य रसनं प्रथमेनातितर्पितम् ॥
न तथा स्वादयेदन्यत्तस्मात् प्रक्षाल्यमन्तरा ॥४७९॥

प्रक्षालयेदद्भिरास्यं गण्डूषं कारयेदित्यर्थः । गण्डूषकरणस्य फलमाह,—विशुद्धेत्यादि । स्वादुना मिष्टेन । तस्य भुञ्जानस्य । अन्यदपर स्वादोरस्वादोर्वा ॥ ४७८ ॥ ४७९ ॥

सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् ॥
स्वादु संजनयत्यन्नमस्वादु च विपर्ययम् ॥ ४८० ॥

तस्य गुणमाह,—सौमनस्यमित्यादि । सौमनस्यं सुमनस्कता, बलं सर्वधातुलेहः, पुष्टिः शरीरोपचयः, उत्साहः प्रसिद्धः, हर्षणं तुष्टिः, सुखं नीरोगता । स्वादु सञ्जनयत्यन्नं स्वाद्वन्नं सौमनस्यादीन् सम्यग् जनयतीति सवन्ध । अस्वाद्वित्यादि अस्वाद्वन्नं सौमनस्यादीना विपर्यय विपरीततां जनयतीत्यर्थः ॥ ४८० ॥

भुक्त्वाऽपि यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् ॥

स्वादोरेवान्नस्य लक्षणं निर्दिशन्नाह,—भुक्त्वेत्यादि । भुक्तवान् हि यत् प्रार्थयते तदेवावश्य स्वादु विज्ञेयम्[१] । अन्ये तु 'तत्साधु भोजनं' इति पठन्ति, मात्रावद्भुञ्जीतेति तस्यैव लक्षणमिति च वदन्ति; तन्नेच्छति गयी ॥—

अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत्॥४८१॥

अशित इत्यादि ।—अशित कृतभोजन , उदकं जलं युक्त्या पिबेदिति सवन्धः; कया युक्त्या? मात्रया; भुञ्जानश्चान्तरा पिबेत् भोजनमध्ये इत्यर्थः ॥ ४८१ ॥

दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः ॥
कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥ ४८२ ॥

अन्यदपि भुक्ते कार्यान्तरं दर्शयन्नाह,—दन्तेत्यादि । शोधनेन तृणादिना ॥ ४८२ ॥

जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेव तु ॥
भुक्तमात्रे कफश्चापि,

भोजनोत्तरकालक्रियाप्रसङ्गेन जरणजीर्णकालयोरपि दोषप्रकोप दर्शयन्नाह,—जीर्णे इत्यादि । जीर्णे परिणामंगते, विदग्धे किंचित्पक्वे ॥—

तस्माद्भुक्तेरितं कफम् ॥ ४८३ ॥
धूमेनापोह्य रूक्षैर्वा कषायकटुतिक्तकैः[२] ॥
पूगकक्कोलकर्पूरलवङ्गसुमनःफलैः ॥ ४८४ ॥
फलैः कटुकषायैर्वा मुखवैशद्यकारकैः ॥
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ४८५ ॥

भुक्ते सति कुपितश्लेष्मण प्रतीकारमाह,—तस्मादित्यादि । भुक्तेरितं भोजनेन प्रेरितम् । अपोह्य स्फोटयित्वा । कषायकटु-

१ 'अवश्य मृष्टमेव कामयतेऽन्न नामृष्टम्' इति पा० ।
२ 'कटुतिक्तकषायैर्वा' इति पा० ।

तिक्तकैरिति अफलैर्द्रव्यैरिति विज्ञेयं, फलै कटुतिक्तकषायैर्वेति वक्ष्यमाणत्वात् । सुमन फलै. जातीफलै ॥ ४८३—४८५ ॥

**भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ॥**
**ततः पादशतं गत्वा वामपार्श्वेन संविशेत् ॥४८६॥**

तदनन्तरं किं कुर्यादित्याह,—तत इत्यादि । सविशेत् शय्यायां शयीत ॥ ४८६ ॥

**शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ॥**
**भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥ ४८७ ॥**

अन्नस्य सस्थापनहेतून् शब्दादिविषयानाह,—शब्देत्यादि । साधु तिष्ठति भव्येन स्थितिं करोति, शब्दादीन् विषयांश्चेत्यन्ये पठन्ति ॥ ४८७ ॥

**शब्दरूपरसाः स्पर्शा गन्धाश्चापि जुगुप्सिताः ॥**
**अशुच्यन्नं तथा भुक्तमतिहास्यं च वामयेत् ॥४८८॥**

कुत· पुनरेते प्रिया अप्रिया इत्याह,—शब्देत्यादि । जुगुप्सिता निन्दिता , अशुचि अपवित्रम् ॥ ४८८ ॥

**शयनं चासनं चापि नेच्छेद्वाऽपि द्रवोत्तरम् ॥**
**नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥४८९॥**
**न चैकरससेवायां प्रसज्येत कदाचन ॥**
**शाकावरान्नभूयिष्ठमम्लं च न समाचरेत् ॥ ४९० ॥**

अन्यदपि सर्व वर्जनीयमाह—शयनमित्यादि । शयनमासनं वा नेच्छेत् चिरकालमित्यर्थ. । द्रवोत्तर द्रवाढ्य भोजनम् । नाग्न्यातपादीन् इच्छेदिति सवन्ध. । प्लवन स्नान जलप्रतरणं वा, यानं गमन, वाहन रथाश्वादि । न प्रसज्येत नाभ्यसेत् न पुनः पुन शीलयेदित्यर्थ । शाकं प्रसिद्धं, अवरान्नं वैदलान्न, एतद्भूयिष्ठ तद्बहुलं, न समाचरेत् न भक्षयेत्, तथाऽम्ल च ॥४८९॥४९०॥

**एकैकशः समस्तान् वा नाध्य(त्य)श्नीयाद्रसान् सदा ।**

रसानामतिमात्राशनदोप दर्शयन्नाह,—एकैकश इत्यादि । एकैकश एकैकरस, समस्तान् वा रसान् नाध्य(त्य)श्नीयात् नाधिकं भक्षयेदित्यर्थ· । दोपरोगापेक्षयैकैकरसविधि , स्वस्थापेक्षया तु समस्तरसविधि । नात्यश्नीयादित्यन्ये, अपरे तु 'एकशोऽथ समस्तान् वा न भुञ्जीत रसान् सदा'-इति पठन्ति व्याख्यानयन्ति च-एकीकृत्य न सर्वमश्नीयात्, यथाक्रममेव षड्रस स्वस्थेन भोक्तव्यं, वाशब्द· समुच्चये ॥—

**प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥४९१॥**
**पूर्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ॥**

अग्नौ मन्दे द्विरन्नसंमभ्यवहारनिषेधं[1] दर्शयन्नाह,—प्रागित्यादि । प्राग्भुक्ते प्रातर्भोजने कृते, अविविक्तेऽग्नौ द्विरन्नं न समाचरेदिति द्वितीयं वार न भुञ्जीतेत्यर्थः । कुत इत्याह,—पूर्वभुक्ते इत्यादि । विदग्धे जठरानलेन किंचित्पक्वे किंचिदामे । भुञ्जानो द्विर्भुञ्जान इत्यर्थ । पावकं जठरानलम् ॥ ४९१ ॥

[1] 'द्विरन्नसमाचारनिषेध' इति पा० ।

**मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः ॥ ४९२ ॥**

मन्दाग्नेरेवाहारविशेषं परिहारार्थं निर्दिशन्नाह,—मात्रेत्यादि । मुद्गादीना लघूनामपि मात्रया गुरुमाहारं परिहरेत्, द्रव्यतो गुरुं माषमहिषवराहपिशितादिकम् ॥ ४९२ ॥

**पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ॥**
**द्विगुणं च पिबेत्तोयं सुखं सम्यक् प्रजीर्यति ॥**

संस्कारगुरोर्द्रव्यविशेषस्य निषेधं दर्शयन्नाह,—पिष्टान्नमित्यादि । अथ कथंचित् पिष्टान्नसेवा तदा क्षुधितस्य मात्रयैव नान्यथेति, तत्र मात्राशब्दोऽल्पतावाचक.; पिष्टान्नभोजने द्विगुणं च पिबेत्तोयम् ॥—

**पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥ ४९३ ॥**

गुरुत्वप्रसङ्गेन चतुर्णां पेयलेह्यादीनां गुरुत्वं निर्दिशन्नाह,—पेयेत्यादि । पेयं पानीयादि, लेह्य मध्वादि, अयं भक्तादि, भक्ष्यं मोदकादि ॥ ४९३ ॥

**गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते ॥**
**द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥ ४९४ ॥**

तत्रोक्ताना पेयादीना लघूना गुरूणा च का मात्रा यामपेक्ष्य मात्रागुरुरित्युपदिश्यत इत्याह,—गुरूणामित्यादि । गुरूणां संस्कारस्वभावकृताना मोदकमाषादीना संस्कारस्वभावाभ्यामेव गुरुतराणा पिष्टमयवराहपिशितादीना त्रिभागसौहित्यमेव, अयं चार्थोऽर्धशब्दादवयववचनाल्लभ्यते । लघूना तृप्तिरिष्यत इति लघुतराणामेव तृप्ति , लघूना पुनरीषत्तृप्ति । न च द्रवद्रवोत्तरयो· पेयत्वाल्लघुलघुतरयो कदाचित्किंचिन्मात्रागौरवेण तौ भजेतेत्याह,—द्रवोत्तर इत्यादि । द्रवोत्तरस्तक्राद्यधिकः, द्रव पेयादि ॥ ४९४ ॥

**द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ॥**

शुष्कस्यापि स्रोतोऽवरोधकारणस्य संयोगान्तरेणादोषं प्रतिपादयन्नाह,—द्रवाढ्यमित्यादि । शुष्कमपि द्रवाढ्यं सम्यगेवोपपद्यते अदोषकर सम्यग्भवतीत्यर्थ· ॥—

**विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥ ४९५ ॥**
**पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥**

केवलविशुष्कस्य पुनराहरणे दोप निर्दिशन्नाह,—विशुष्कमित्यादि । अभ्यस्तं सेवितं, साधु भव्येन । कथं तर्हि पाक गच्छतीत्याह,—पिण्डीकृतमित्यादि । असक्लिन्नमसम्यगार्द्रीभावमापन्नं, विदाहमुपगच्छति विदग्धतामुपयाति ॥ ४९५ ॥—

**स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ॥ ४९६ ॥**
**विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ॥**

शुष्काद्यन्नस्य विप्रकृष्टविदाहप्रसङ्गेन सन्निकृष्टहेतुजमपि विदाहं दर्शयन्नाह,—स्रोतसीत्यादि । स्रोतस्यन्नवहे आमाशये, पक्तौ अग्निस्थाने, विदाहि भुक्तमिति अन्न, अन्यद्वेति अविदाह्यन्नं, विदह्यते विदग्धतामुपयाति ॥ ४९६ ॥—

**शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥४९७॥**

शुष्कान्नप्रसङ्गेन शुष्कस्येतरस्य च वह्निमान्द्यकरत्वमाह,—शुष्कमित्यादि। शुष्कं पिष्टान्नादि, विरुद्धं क्षीरमत्स्यादिकं, विष्टम्भि चणकमसूरादि, वह्निव्यापदमग्निमान्द्यं, आवहेत् कुर्यात् ॥ ४९७ ॥

**आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ॥**
**अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ४९८ ॥**

तामेव वह्निव्यापदं विप्रकृष्टकारणोपजनितामभिधाय सन्निकृष्टवातादिजाजीर्णलक्षणा निर्दिशन्नाह,—आममित्यादि। आहारस्यैव पक्वस्योर्वरितो रसो रसशेष, तस्मादल्पदोषदूषितत्वान्न तस्य दोषव्यपदेशो भवति ॥ ४९८ ॥

**अत्यम्बुपानाद्विषमाशनाद्वा**
**सन्धारणात् स्वप्नविपर्ययाच्च ॥**
**कालेऽपि सात्म्यं लघु चापि भुक्त-**
**मन्नं न पाकं भजते नरस्य ॥ ४९९ ॥**
**ईर्ष्याभयक्रोधपरिक्षतेन**
**लुब्धेन रुग्दैन्यनिपीडितेन ॥**
**प्रद्वेषयुक्तेन च सेव्यमान-**
**मन्नं न सम्यक् परिणाममेति ॥ ५०० ॥**

कस्मादजीर्णं भवतीत्याह,—अत्यम्बुपानादित्यादि। रात्रौ जागरणं दिवसे च स्वप्न स्वप्नविपर्ययः। कायिककारणमभिधाय मानसरजस्तमोदोषकृतमजीर्णमाह,—ईर्ष्येत्यादि। ईर्ष्या परसम्पत्तावसहिष्णुता, भय परस्मात्त्रासः, क्रोध पराभिद्रोहलक्षण, परिक्षतेन ईर्ष्यादिभि परिभूतेन। लुब्धेन लोभसहितेन। रुग्दैन्यनिपीडितेन रोगदैन्यव्याप्तेन, दैन्यं निर्गतित्वम्। प्रद्वेषो मात्सर्यम् ॥ ४९९ ॥ ५०० ॥

**माधुर्यमन्नं गतमामसंज्ञं**
**विदग्धसंज्ञं गतमम्लभावम् ॥**
**किंचिद्विपक्वं, भृशतोदशूलं**
**विष्टब्धमान(व)द्धविरुद्धवातम् ॥ ५०१ ॥**
**उद्गारशुद्धावपि भक्तकाङ्क्षा**
**न जायते हृद्गुरुता च यस्य ॥**
**रसावशेषेण तु सप्रसेकं**
**चतुर्थमेतत् प्रवदन्त्यजीर्णम् ॥ ५०२ ॥**

तेषामेवाजीर्णाना लक्षण दर्शयन्नाह,—माधुर्यमित्यादि। श्लेष्मदूषणप्रभावोपजनितमाधुर्यगतमामं तदेव कफदूषितं वा तत्स्वभावकत्वमापन्नं; कफकार्याणि तु तत्र गौरवस्नेहकण्डूप्रभृतीनि च द्रष्टव्यानि। विदग्धसंज्ञमिति किंचिद्विपक्वमम्लभावं गतमन्नं विदग्धसंज्ञं कथ्यते। तत्कथंभूत? किंचिद्विपक्वम्। अत्रापि शुक्ततिक्ताम्लोद्गारादीनि पित्तकार्याणि द्रष्टव्यानि। आनद्धविरुद्धवातं विष्टब्ध कथ्यते। तत्कथम्भूतं? भृशतोदशूलमिति। आनद्धोऽप्रवृत्तो विरुद्धो विशेषेण रुद्धो वातो यस्मिन् तत्तथा। अत्रापि वातकार्याणि जृम्भाङ्गमर्दशिरोरुजादीनि द्रष्टव्यानि। भृशतोदशूलमत्यर्थतोदशूलम्। उद्गारशुद्धावित्यादि। भक्तकाङ्क्षा न जायते नोत्पद्यते, हृद्गुरुता हृदयगौरवं भवति, यस्याजीर्णस्य, रसावशेषेण कृत्वा, सप्रसेकं लालास्रावसहितम्। एतानि सङ्क्षेपेणाजीर्णलक्षणान्युक्तानि ॥ ५०१—५०२

**मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥**
**उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ॥ ५०३ ॥**

अजीर्णदोषलिङ्गं प्रदर्श्य व्याधिसामान्यलक्षणभूतप्रभावोपजनितकार्याणि निर्दिशन्नाह,—मूर्च्छेत्यादि। मूर्च्छा चेतनाच्युति, प्रलापोऽसम्बद्धभाषणं, वमथुश्छर्दिः, सदनमङ्गग्लानिः, अन्ये तु स्फुटनमिवाङ्गानामिति वदन्ति। भ्रमश्चक्रारूढस्येव ॥ ५०३ ॥

**तत्रामे लङ्घनं कार्यं विदग्धे वमनं हितम् ॥**
**विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च ॥ ५०४ ॥**
**वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना ॥**
**कार्यं चानशनं तावद्यावन्न प्रकृतिं भजेत् ॥ ५०५ ॥**
**लघुकायमतश्चैनं लङ्घनैः समुपाचरेत् ॥**
**यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ ५०६ ॥**

अजीर्णाना चिकित्सामाह,—तत्रेत्यादि। आमे लङ्घनं कार्यं, उत्क्लेदे तत्रापि वमनमावस्थिकम्। विदग्धे वमनं हितमिति रसस्याम्लस्य व्यापन्नस्यानुद्धरणे कुष्ठाबाधभयात्। तत्र केचित्, 'आमे तु वमनं कार्यं विदग्धे लङ्घनं हितम्' इति पठन्ति, तन्नेच्छति गयी। विष्टब्धे स्वेदनमिति स्वेदनस्यामवातविजयकारिपाचनत्वात्। रसशेषे शयीत चेति चकारेण स्वेदोऽपि रसशेषे तथा पाचनमपि, तच्च पाचनमन्नकालेऽन्नसहितं देयमिति समुच्चीयते। तत्र विदग्धे वमन कर्तव्यं तत् केनेत्याह,—वामयेदित्यादि। आमे लङ्घनमिति तत्कियन्तं कालमित्यवधिं दर्शयन्नाह,—कार्यमित्यादि। वाशब्द समुच्चये। प्रकृतिरत्राजीर्णनिवृत्तिः। लघ्वित्यादि। अत पूर्वोक्तविधानादनन्तरम्। एनमजीर्णिनम्। प्राणो बलम् ॥ ५०४—५०६ ॥

**हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् ॥**
**बहु स्तोकमकाले वा विज्ञेयं विषमाशनम् ॥५०७॥**
**अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ॥**
**त्रयमेतन्निहन्त्याशु बहून्व्याधीन्करोति वा ॥ ५०८ ॥**

तत्राजीर्णप्रसङ्गेन तस्याजीर्णे भुज्यमानस्यान्नस्यात्यशनसञ्ज्ञकस्यानर्थावहत्वात्तत्तुल्यानां समशनादीनामपि लक्षणं निर्दिशन्नाह,—हिताहितेत्यादि। हिताहितोपसयुक्तमिति हितमहितं चान्नमैकध्यमुपयुक्तम्। यथा—"धान्यं नवं पुराणं यच्छाकं जीर्णं च कोमलम्। ऐकध्यं तद्विरुद्धं स्याच्छीतोष्णं च स्वजातित—" इति। अन्ये तु हितमेवाहितं येन सपद्यते तत् हिता-

हितोपसंयुक्तम् । यथा—गोक्षीर मत्स्येन सहितमहितं सपद्यते । विषमाशनं निर्दिशन्नाह,—बहित्यादि । बहु प्रचुरं, स्तोकमल्प, अकाल इति अकालोऽप्राप्तोऽतीतो वा कालस्तत्र भुक्तम् । अध्यशनं निर्दिशन्नाह,—अजीर्णे इत्यादि । त्रयाणामपि समशनादीना फलमाह,—त्रयमित्यादि ॥ ५०७ ॥ ५०८ ॥

अन्नं विदग्धं हि नरस्य शीघ्रं
शीताम्बुना वै परिपाकमेति ॥
तद्ध्यस्य शैत्येन निहन्ति पित्त-
माक्लेदिभावाच्च नयत्यधस्तात् ॥ ५०९ ॥

पुनरपि विदग्धाजीर्णस्य चिकित्सामाह,—अन्नमित्यादि । तत् शीताम्बु, हिशब्दो यस्मादर्थे, अस्य नरस्य, आक्लेदिभावात् पित्तं निहन्ति । केचिदत्र विदग्धं हीत्यारभ्य या मन्दबुद्धिं विषवन्निहन्तीति यावत् सकलमपि पाठमनार्षं वर्णयन्ति, तन्न, गयदासेनाङ्गीकृतत्वात् ॥ ५०९ ॥

विदह्यते यस्य तु भुक्तमात्रे(त्रं)
दह्येत हृत्कोष्ठगलं च यस्य ॥
द्राक्षाभयां माक्षिकसम्प्रयुक्तां
लीढ्वाऽभयां वा स सुखं लभेत ॥ ५१० ॥

आमाशयगतान्नविदाहस्य चिकित्सामाह,—विदह्यते इत्यादि । यस्य पुरुषस्य, भुक्तमात्रे सति आमाशयो विदह्यते विशेषेण दाहवान् भवति, हृत् हृदयं कमलमुकुलाकारमधोमुखं, कोष्ठमुदरम् । द्राक्षायुक्तामभया लीढ्वेति सवन्ध, अयमेको योग·; माक्षिकसयुक्ता लीढ्वाऽभया चेति द्वितीयो योग· । अन्ये तु भुक्तमात्रामिति पठन्ति, भुक्तमात्रामेव प्राप्यामाशयो विदह्यत इत्यर्थः ॥ ५१० ॥

भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ॥
प्रातः सशुण्ठीमभयामशङ्को
भुञ्जीत सम्प्राश्य हितं हितार्थी ॥ ५११ ॥

रसावशेषाजीर्णविषयं सशमनमाह,—भवेदित्यादि । प्रातर्यस्याजीर्णशङ्का भवति सः पुरुष शुण्ठीमभयासमेतामन्नकाले सम्प्राश्य भक्षयित्वा, अशङ्को नि शङ्क सन् भुञ्जीत ॥ ५११ ॥

स्वल्पं यदा दोषविबद्धमामं
लीनं न तेजःपथमावृणोति ॥
भवत्यजीर्णेऽपि तदा बुभुक्षा
सा मन्दबुद्धिं विषवन्निहन्ति ॥ ५१२ ॥

अजीर्णेऽपि बुभुक्षा दर्शयन्नाह,—स्वल्पमित्यादि । स्वल्पमित्यामविशेषण, अन्ये तु स्वल्पमपि तेज पथमावृणोतीति तेज · पथस्येद विशेषणमाहु· । लीन तद्गतेन वायुनैकपार्श्वे लीनमित्यामविशेषण, तेज पथं जठरानलमार्ग, सा बुभुक्षा मन्दबुद्धिं प्राणिनं विषवन्निहन्तीति सवन्ध । अत्र केचित्पठन्ति,—"अन्नेन कुक्षेर्द्वावंशौ पानेनैकं च पूरयेत् । आश्रयं पवनादीना चतुर्थमवशेषयेत्"—इति । सर्वनिबन्धकारैरपठितत्वान्न पठनीयम् ॥ ५१२ ॥

अत ऊर्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम् ॥
कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥५१३॥
ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित् ॥
उष्णस्तद्विपरीतः स्यात्पाचनश्च विशेषतः ॥ ५१४ ॥
स्नेहमार्दवकृत्स्निग्धो बलवर्णकरस्तथा ॥
रूक्षस्तद्विपरीतः स्याद्विशेषात्स्तम्भनः खरः ॥५१५॥
पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः ॥
विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः ॥५१६॥
दाहपाककरस्तीक्ष्णः स्रावणो, मृदुरन्यथा ॥
सादोपलेपबलकृद्गुरुस्तर्पणबृंहणः ॥ ५१७ ॥
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ॥
दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥५१८॥
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे ॥
द्रवः प्रक्लेदनः, सान्द्रः स्थूलः स्याद्बन्धकारकः ॥
श्लक्ष्णः पिच्छिलवज्ज्ञेयः, कर्कशो विशदो यथा ५१९
सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ॥
दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः ॥५२०॥
सरोऽनुलोमनः प्रोक्तो, मन्दो यात्राकरः स्मृतः ॥
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥५२१॥
विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत् ॥
आशुकारी तथाऽऽशुत्वाद्धावत्यम्भसि तैलवत् ५२२
सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः ॥
गुणा विंशतिरित्येवं यथावत्परिकीर्तिताः ॥ ५२३ ॥

पूर्वं हि सपादितं 'तदस्य शैत्येन निहन्ति पित्तं' इति, तत्र न ज्ञायन्ते के पुनस्ते शीतादय इति तान् निर्दिशन् लक्षणमाह,—अत इत्यादि । कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणा इति अत शीतगुण कथं ज्ञायत इत्याह,—ह्लादन इत्यादि ।—ह्लादन सुखकारीत्यर्थः, पाचनो व्रणादीनाम् । स्नेहेत्यादि स्निग्धो गुणः स्नेहादिकारण इत्यर्थः । रूक्ष इति रूक्षो गुणस्तद्विपरीतो रौक्ष्यकाठिन्यकर इत्यर्थ· । विशेषात् विशेषतः स्तम्भनोऽतीसारादीना, खर कर्कश । पिच्छिल इति पिच्छिलो गुण, जीवन· प्राणधारण·, सन्धानो भग्नस्य । विशद इति विशदो गुण, विपरीतोऽस्मादिति असन्धानोऽजीवनोऽश्लेषी च । क्लेदाचूषण आर्द्रीभावविनाशकर इत्यर्थः । दाहेत्यादि अन्यथेति अदाहपाककरोऽस्रावण इत्यर्थ । सादेत्यादि सादोऽङ्गग्लानि, उपलेपो मलवृद्धि, बलं श्लेष्मा । गुरुर्गुण, तर्पणस्तृप्तिजनक, बृंहणो देहवृद्धिकर· । लघुरित्यादि । लघुस्तद्विपरीत इति असादाद्यनुपलेपकृत् कफहरश्चेत्यर्थ· । लेखन पत्तलीकरण । दशाद्या इति दशसङ्ख्योपेता आद्याः शीतादयो गुणा· ।

कर्मेत प्रोक्ताः कर्मभिः सह प्रोक्ता इत्यर्थः। तेषामिति तेषां मध्ये, कर्मविशेषणं कृत्वा। द्रव इति द्रवो गुण, प्रक्लेदन आर्द्रभावकरः। सान्द्रो गुणः, बन्धकारक उपचयकारक इत्यर्थः, 'द्रवः प्रक्लेदनो व्यापी शुष्कः स्याद्बन्धकारक.' इति केचित् पठन्ति। शुष्को गुणः, बन्धकारकः शुष्कस्य शोषणत्वेनावयवपृथक्त्वमित्यर्थः (१)। श्लक्ष्ण इत्यादि।—श्लक्ष्णो गुण, पिच्छिलवज्ज्ञेयः जीवनः श्लेष्मसन्धानकृदित्यर्थः। कर्कश इति कर्कशो गुण.; विशदो यथेति अजीवनोऽश्लेष्मी च, तथाऽसन्धानकार्श्यकृच्च। सुखानुबन्धीति सुखानुबन्धी सुखोत्पादक इत्यर्थ। सूक्ष्मोऽवगाहकः। सुगन्धो गुणः। दुर्गन्ध इत्यादि हृल्लासारुचिकारक इति पुनररुचिग्रहण द्विविधारुचिप्रापणार्थं, तेनाहार न काङ्क्षति क्रियमाणाच्च विरसीभवति, हृल्लासस्थूत्करणं, छर्दिरित्यन्ये। सर इत्यादि सरो गुण, अनुलोमनो वातमलप्रवर्तन.। मन्द इत्यादि मन्दो गुण। यात्राकर इति शरीरस्थायित्वाद्देहस्य यात्रा वर्तनं करोति। व्यवायीत्यादि व्यवायी गुणः। अखिलमित्यादि अपक्व एवाखिलं देहं व्याप्नोति पश्चान्मद्यविपवत्पाकं याति, अन्ये 'भावाय कल्पते' इति पठन्ति, तत्रापि स्थितये कल्पते नोर्ध्वमधो वा प्रवर्तत इति स एवार्थ., अपरे तु पुनर्भावशब्दमभिप्रायार्थमिच्छन्ति, तत्र नियतद्रवप्रभावेणात्मशक्त्यनुरूप तत्तद्द्रव्यं मद्यविपवद्विशिष्टाभिप्रायाय कल्पत इत्यर्थ। व्यवायिनः सकाशाद्विकासिद्रव्यस्य किञ्चिद्भेदं दर्शयन्नाह,—विकासीत्यादि। विकासी गुण., विकसन् प्रसर्पन्, एवमिति अपक्व एव सकलं देहं व्याप्य, धातुबन्धान् विमोक्षयेत् धातुशैथिल्यं करोतीत्यर्थ.। अन्ये तु सरविशेषो व्यवायी, तीक्ष्णविशेषो विकासीति ब्रुवते, तन्नेच्छति गयी। आशुकारीत्यादि आशुकारी गुण', आशुत्वात्। सूक्ष्म इत्यादि सूक्ष्मो गुण', अत्र स्थूलगुणमपि केचित्पठन्ति, स च पाठोऽभावान्न लिखित। गुणा इति नन्वत्र स्थूलगुणेन सह त्रयोविंशतिर्गुणा भवन्ति, कथं विंशति कथ्यन्ते? उच्यते, केचिदत्र संख्याभङ्गभयाद्व्यवायिविकास्याशुकारिणामपाठमेव मन्यन्ते; अन्ये पुनराहु'—अधिकायामपि गुणविंशतावुक्ताया गुणा विंशतिरुक्ता, न चात्र नियमो विंशतिरेवेति, व्यवायिविकास्याशुकारिणा तु स्वतन्त्रे परतन्त्रे च दर्शनात् पाठो न्याय्य एव, अपरे पुन प्रागेव दशैवान्यानित्यस्य स्थाने दश चान्यानिति चकार पठन्ति, तेन व्यवायिविकास्याशुकारिणोऽपि समुच्चीयन्ते॥ ५१३—५२३॥

**संप्रवक्ष्याम्यतश्चोर्ध्वमाहारगतिनिश्चयम्॥**

सप्रवक्ष्यामीत्यादि। आहारस्य गतिनिश्चयो यद्यदात्मकमभ्यवहृतं पक्वं यद्द्रव्यगुणं याति गतमपि यच्च पुष्णाति तस्य निर्णय इत्यर्थ.॥

**पञ्चभूतात्मके देहे ह्याहारः पाञ्चभौतिकः॥**
**विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्धयेत्॥५२४॥**

तमेवाहारगुणं निर्दिशन्नाह,—पञ्चेत्यादि। पञ्चभूतात्मके इति पृथिव्यादिपञ्चभूतहेतुके। आहारः पाञ्चभौतिक इति आहारोऽपि पञ्चमहाभूतस्वरूप। विपक्व पञ्चधा सम्यगिति पञ्चभिर्महाभूताग्निभि'। गुणानिति गुणशब्देनात्र गुणिन पृथिव्यादय उच्यन्ते। तेन पार्थिवाः पार्थिवानभिवर्धयन्ति, एवं शेषेष्वपि। अन्ये तु गुणानिति गन्धादीन्, स्वानिति पञ्चगुणिनो द्रव्याणि पार्थिवादीनि, तेन गन्धादीनात्मनश्च पार्थिवादीनि द्रव्याण्यभिवर्धयेदित्यर्थ॥

**अविदग्धः कफं पित्तं विदग्धः पवनं पुनः॥**
**सम्यग्विपक्वो निःसार आहारः परिबृंहयेत्॥५२५॥**

दोषाणामाहारावस्थापाकात् प्रकोपवर्धनलक्षणं प्रतिपादयन्नाह,—अविदग्ध इत्यादि। अविदग्धो मधुराहार, कफं परिबृंहयेत् अतिशयेन वर्धयेदित्यर्थः। पित्त विदग्धोऽम्लीभूत आहारः परिबृंहयेत्। पवनं पुन' सम्यग्विपक्व आहार', निःसारो निर्गतसारः, रौक्ष्येण परिबृंहयेदित्यर्थः॥

**विण्मूत्रमाहारमलः सारः प्रागीरितो रसः॥**

एव दोषाणामवस्थापाकाद्वर्धनं प्रतिपाद्य पर्यन्तपाकाद्विण्मूत्रयोर्मलयो रसस्य धातुस्वभावस्य चोत्पत्तिं दर्शयन्नाह—विण्मूत्रेत्यादि। प्रागीरित पूर्वं कथितः शोणितवर्णनीये॥—

**स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत् ५२६**

तस्मादेव रसादन्येषामपि धातूनामुत्पत्तिं दर्शयन्नाह,—स त्वित्यादि। स रस, व्यानेन वातविशेषेण, विक्षिप्त प्रेरित, प्रतर्पयेत् अतिशयेन वर्धयेत्, व्यानस्य सर्वाङ्गव्यापित्वेन दोषधातुमलव्यापित्वात्, स च कुल्याकेदारन्यायेन सर्वान् धातून् प्रतर्पयति॥

**कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च॥**
**नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ५२७**

तेषामेव दोषमलाना यतो यतो यस्योत्पत्तिस्तां दर्शयन्नाह—कफ इत्यादि। तत्राहारस्य मलौ विण्मूत्रे प्रागुक्ते। कफो रसस्य मलः। पित्त रक्तस्य मलम्। खेष्विति खेषु कर्णश्रोत्रमुखादिषु स्रोतःसु मासस्य। स्वेद प्रस्वेद. स मेदसो मल। नखरोम पुनरस्थ्नो मल। नेत्रविट् त्वक्षु च स्नेह इति नेत्रविट् अक्षिपुरीषं, त्वक्षु च स्नेहस्त्वचा च यः स्नेह स मज्ज्ञो मल.। धातूनामित्यादि रसादिमज्जान्ताना, यथाक्रमं मला इत्यर्थ.। शुक्रं पुनरमलं सहस्रधा ध्माताक्षयसुवर्णवदिति, आकृष्टाण्डको-

१ 'ये त्वत्र सान्द्रादनन्तर श्लक्ष्णकर्कशयो पाठात्सूक्ष्मान्ता द्रवादयो द्वादशैव भवन्ति न त्वेव दशेत्येव विप्रतिपद्यन्ते तान् पुनः कटाक्षयन्नाह—श्लक्ष्ण इति। अयमभिसन्धि —सख्येय कर्मविशेषमाश्रित्योपदिश्यते, श्लक्ष्णकर्कशौ तु पिच्छिलविशदसाम्यादुक्तगुणौ नातो द्वादशत्वापत्तिर्गन्धमात्रेणाप्युपलभ्यत इति'इति हाराणचन्द्रः।

षस्य पुंसः श्मश्रुपातात् श्मश्रु एव शुक्रमल इत्येके, तन्नेच्छति गयी ॥ ७८—८३ ॥

**दिवा विबुद्धे हृदये जाग्रतः पुण्डरीकवत् ॥**
**अन्नमक्लिन्नधातुत्वादजीर्णेऽपि हितं निशि ॥ ५२८ ॥**
**हृदि सम्मीलिते रात्रौ प्रसुप्तस्य विशेषतः ॥**
**क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा ॥ ५२९ ॥**

ननु, यदन्नमजीर्णे भुज्यते तदध्यशनमुच्यते, प्रातर्भुक्ते यद्दिनान्ते भुज्यते तत्कथमध्यशनं न भवतीत्याह,—दिवेत्यादि । दिवा दिवसे, पुण्डरीकवत् पद्मवत्, विबुद्धे विकसिते हृदये, जाग्रत· पुरुषस्य, अक्लिन्नधातुत्वात् अनार्द्रधातुत्वात्, अजीर्णेऽप्यन्नं हितमिति सवन्ध । यथा—अजाते पयसि अन्यदाहृतं पय । दिवा विबुद्धे हृदये इत्युक्तेऽपि यज्जाग्रत इति कृतं तदेतदधिकं वोधयति—अजाग्रतोऽपि स्वभावादेव विबुद्धं हृदयं भवति । सायं भुक्तेऽजीर्णे प्रातर्भोजनं न हितमित्यर्थमाह,—हृदीत्यादि । रात्रौ हृदि हृदये समीलिते सङ्कुचिते, प्रसुप्तस्य विशेषत· समीलित इति सवन्धः । क्लिन्नविस्रस्तधातुत्वात् आर्द्रशिथिलधातुत्वात् । अजीर्णे 'सायं भुक्ते' इति शेषः । न हितं दिवेति दिवा अन्नं हित न भवतीत्यर्थ· ॥ ५२८ ॥ ५२९ ॥

**इमं विधिं योऽनुमतं महामुने-**
**र्नृपर्षिमुख्यस्य पठेद्धि यत्नतः ॥**
**स भूमिपालाय विधातुमौषधं**
**महात्मनां चार्हति सूरिसत्तमः ॥ ५३० ॥**

**इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां सूत्रस्थाने षट्चत्वारिंशत्तमोऽध्यायः ।**

उक्तसूत्रपाठानुशंसा दर्शयन्नाह,—इममित्यादि । इमं विधिं सूत्रस्थानोदितमाहारविधिं वा य· पठेत् प्रयत्नत इति संवन्धः । महामुनेर्धन्वन्तरेः । किम्भूतस्य महामुनेः? नृपर्षिमुख्यस्य राजर्षिप्रधानस्य, य· स सूरिसत्तम· पण्डितप्रधानः, विधातुं कर्तुं, महात्मना राजसदृशाना, अर्हति योग्यो भवति ॥५३०॥

इति श्रीडल्हणविरचिताया निवन्धसंग्रहाख्यायां
समस्तनिवन्धार्थज्ञापिकाया सुश्रुतटीकाया
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥



निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता ।

## अथ निदानस्थानम् ।

### प्रथमोऽध्यायः ।

**अथातो वातव्याधिनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

हेतुलिङ्गौषधज्ञानबीजभूतेन सूत्रस्थानेन संक्षेपोद्दिष्टस्य हेतुलिङ्गौषधस्य विवरणे सर्वाण्येव स्थानानि प्रस्तुतानि, तेषु च प्रस्तुतेषु स्वाधिकाराणां शल्यतन्त्रव्याधीनां हेतुलक्षणप्रतिपादकतया निदानस्थानस्यारम्भ, तत्रापि दोषाणा वातस्य प्रधानत्वात्तद्व्याधीना हेतुलक्षणाभ्यां प्राक् प्रतिपादनं युज्यत इत्याह,—अथात इत्यादि। वातव्याधेराक्षेपकादेर्निदानं हेतुलक्षणनिर्देश। अथातो वातव्याधिनिदानमिति यद्यपि प्रथममेव सूत्रमस्ति तथाऽपि प्राब्रवीद्भिषजांवर इत्यनन्तर द्रष्टव्यम्, अनुपासितस्याप्रार्थितस्य गुरोः शिष्याणां व्याख्यानेऽनधिकारात् ॥ १ ॥ २ ॥

**धन्वन्तरिं धर्मभृतां वरिष्ठममृतोद्भवम् ॥**
**चरणावुपसंगृह्य सुश्रुतः परिपृच्छति ॥ ३ ॥**
**वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः ॥**
**स्थानं कर्म च रोगांश्च वद मे वदतां वर ! ॥ ४ ॥**

कः पुनरेवं प्रतिज्ञातवानिति तमेव प्रकारेण दर्शयन्नाह,—धन्वन्तरिमित्यादि । धर्मभृता धार्मिकाणा, वरिष्ठ श्रेष्ठम् । अमृतेन सह उद्भव उत्पत्तिर्यस्य तम् । चरणावुपसगृह्येति पादपतनं कृत्वेत्यर्थ. । किं परिपृच्छतीत्याह,—वायोरित्यादि । प्रकृतिभूतस्य स्वभावस्थितस्य, व्यापन्नस्य विकृतस्य, कोपनैर्द्रव्यगुणकर्मभिर्वायुसमानै. । स्थानं श्रोणिगुदादि, तच्च प्रकृतस्य वायो, विकृतस्य तु सर्वशरीरम् । कर्म सामान्यं विशिष्टं च, सामान्यमिन्द्रियार्थोपसम्प्राप्तिमित्यादि, विशिष्टं स प्राणो नाम देहधृगित्यादि । रोगांश्चेति हिक्काश्वासादिकान् । यदाह—"प्रायश कुरुते दुष्टो हिक्काश्वासादिकान् गदान्" इति । वदता व्याख्यातॄणा मध्ये, वर ! श्रेष्ठ ! । कोपनैरित्यत्र 'भूपते' इति केचित् पठन्ति, 'वद मे' इत्यत्र च 'वदस्व' इति पठन्ति, तत्र भूपते इति धन्वन्तरिसंबोधनं; वदस्व वद इति चैक एवार्थः । मे मम । कर्मग्रहणं केचिन्नाधीयते; तन्मते, 'स्थानं रोगविभागं च' इति पाठ ॥ ३ ॥ ४ ॥

**तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः ॥**
**स्वयंभूरेष भगवान् वायुरित्यभिशब्दितः ॥ ५ ॥**
**स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ॥**
**सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः ॥ ६ ॥**
**स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ॥**
**अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः ॥७॥**
**तिर्यग्गो द्विगुणश्चैव रजोबहुल एव च ॥**
**अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट् ॥ ८ ॥**
**आशुकारी मुहुश्चारी पक्वाधानगुदालयः ॥**

तस्येत्यादि । तस्य सुश्रुतस्य । तत् पूर्वोक्तम् । भिषजांवरो वैद्यश्रेष्ठो धन्वन्तरि । गुरुरिति केचित्पठन्ति । प्राब्रवीत् जगाद । एष वायुरिति सवन्ध, भगवान् समस्तैश्वर्यगुणयुक्त, अणिमादिगुणयुक्त इत्यर्थ । अभिशब्दित कीर्तित । स्वयंभूत्वे हेतुत्रितयमाह,—स्वातन्त्र्यादित्यादि । स्वातन्त्र्यादिति स्वकर्मविषये नान्येन प्रेर्यत इत्यर्थ, नित्यभावात् नित्यस्य हि कारणरहितत्वेन स्वातन्त्र्यम्, अतश्च स्वयंभूत्वमित्यर्थ, सर्वगत्वाच्चेति यो हि सर्वगत स स्वयम्भू, आकाशवत् । चकारात् सूक्ष्मत्वमपि परमाणोरिव स्वयंभूत्वे हेतु समुच्चीयते । कथं पुनरस्य सर्वगत्वं यावता पार्थिवद्रव्यमूर्तिषु वायुर्नास्तीत्याह,—सर्वेषामित्यादि । सर्वेषा स्थावरजङ्गमाना, सर्वात्मा कारणकार्यात्मकत्वेन सर्व(स्व)रूप, सर्वप्रयोजनहेतुरिति केचित् । सर्वलोकनमस्कृत इति कुत इत्याह,—स्थित्युत्पत्तिविनाशेष्वित्यादि । स्थितिः जीवनम् । अव्यक्तोऽदृश्यमूर्ति । व्यक्तकर्मा प्रकटक्रिय । शीत इति असंयुक्तस्य वायोर्गुणोऽयं, संयुक्तस्तूष्णोऽपि । खर खरस्पर्श, कर्कोटकफलवत् । तिर्यग्गस्तिर्यग्गामी । द्विगुण शब्दस्पर्शगुण । रजोबहुल इति त्रिगुणत्वेऽप्युत्कर्षविशेषाद्रज प्रबलत्वमस्य । अचिन्त्यवीर्योऽचिन्त्यशक्तिः, सा चास्य शक्ति शरीरे

---

१ 'स्वाधिकारिणा' इति पा० ।
२ 'अनुपासिताप्रार्थितगुरो' इति पा० ।
३ 'भक्त्यतिशयार्थम्' इति पा० ।

१ 'शरीररसदोषमूत्र०' इति पा० ।

दोषमूत्रपुरीषादिविभागोऽवयवादिसस्थानका(क)रणं दोपधातुमलसवाहनादिश्च, शरीराद्बहिस्तु सचरतो धरणीधारणादि । दोषाणा नेता दोषधातुमलाना प्रेरक इत्यर्थः, अन्ये तु वायोरपि वायुरेव नेतेति बहुवचनं समर्थयन्ति । रोगसमूहराडिति रोगसमूहे रोगहेतुवृन्दे पित्तकफरक्तादौ राजते शोभते इति रोगसमूहराट्; न तु राट्शब्दो राजपर्याय', 'स रोगानीकराट् स्मृत' इत्यग्रेतनेन सह विरोधापत्तेः । आशुकारी शीघ्रमत्ययकारित्वात् । मुहुर्मुहु' प्रकृतिभूतोऽपि चरतीति मुहुश्चारी । पक्काधानगुदालय इति पक्काशयगुदौ स्थानमस्येत्यर्थ. ॥ ५—॥ ८ ॥—

**देहे विचरतस्तस्य लक्षणानि निबोध मे ॥ ९ ॥**
**दोषधात्वग्निसमतां संप्राप्तिं विषयेषु च ॥**
**क्रियाणामानुलोम्यं च करोत्यकुपितोऽनिलः ॥१०॥**

निबोध मे इति निबोध जानीहि, मे मत्सकाशात् । धातुशब्दानन्तरमादिशब्दो लुप्तो द्रष्टव्य', तेन मलोपधातूनामपि ग्रहणं, अथवा धातुशब्देन मलोपधातव उच्यन्ते, शरीरधारणकारणात् । विषयेषु शब्दस्पर्शरूपरसगन्धेषु । क्रियाणा कायवाङ्मानसीनाम् । आनुलोम्यं प्रवर्तकत्वम् । गयदासाचार्यस्तु इमं श्लोकमिन्द्रियार्थोपसम्प्राप्तिमित्यादि कृत्वा पठति, स च विस्तरभयान्न लिखित ॥ ९ ॥ १० ॥

**यथाऽग्निः पञ्चधा भिन्नो नामस्थानात्मकर्मभिः ॥**
**भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः ॥११॥**

तदेवं सर्वानिलस्य सामान्येन स्वास्थ्यहेतुत्वं प्रदर्श्य स्थानोपाधिभेदेन भिन्नस्य नामान्तरविशिष्टस्य प्रतिस्थानं विशिष्टस्वस्थरोगाश्च दर्शयन्नाह,—यथाऽग्निरित्यादि । यथाऽग्नि पित्तग एक एव पाचकरञ्जकालोचकभ्राजकसाधकेति नाम्ना, ([१]न पुनरत्र बाह्याग्नेर्गार्हपत्याहवनीयदक्षिणाग्न्यावसथ्यसभ्यलक्षणा भेदा' ।) स्थानेनामपक्काशयादिना, क्रियया अन्नपाचनादिकया, आमयेनाम्लपाकादिना पञ्चविध, एवमनिलोऽप्येक एव नामादिभि पञ्चविध' । अन्ये तु पुनरत्र बाह्याग्नेर्गार्हपत्याहवनीयदक्षिणाग्न्यावसथ्यसभ्यलक्षणान् पञ्च भेदानाहुः, तन्नेच्छति गयदासाचार्यः ॥ ११ ॥

**प्राणोदानौ समानश्च व्यानश्चापान एव च ॥**
**स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥१२॥**

तत्र वायोर्नामान्याह,—प्राणोदानावित्यादि । स्थानस्था स्थानशब्देनात्र साम्यमुच्यते । यापयन्ति धारयन्ति ॥ १२ ॥

**वायुर्यो वक्रसंचारी स प्राणो नाम देहधृक् ॥**
**सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते ॥ १३ ॥**
**प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥**

वक्त्रसचारित्वस्योपलक्षण, तेन मूर्धोर कण्ठनासिका अपि प्राणस्य स्थानम् । अन्तः अभ्यन्तरमन्नं प्रवेशयति [१]देहधारणाय । प्राणाश्चाप्यवलम्बत इति प्राणानग्न्यादीन्, अवलम्बते स्वक्रियासु योजयति । गयदासाचार्यस्त्वेवं मन्यते,—प्राणानामग्नीषोमादीनामवलम्बनवचनेनाधारभूतहृदयावलम्बनमेवोच्यते, एतेन प्राणाधारहृदयधारणेन प्राणधारणमेवोक्तम् । अत एव प्राणानामवलम्बनेन मरणमूलत्वमुच्यते । यदुक्तं श्रुतौ,—"यथा सैन्धवोऽश्वः शङ्कुमुत्पाट्य धावति तद्वत् प्राणो रुद्धः सर्वान् वायूनुत्पाट्य प्रयाणकाले धावति"—इति । श्वासादिकानित्यादिशब्दात् प्रतिश्यायस्वरभेदकासादय ॥ १३ ॥—

**उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः ॥ १४ ॥**
**तेन भाषितगीतादिविशेषोऽभिप्रवर्तते ॥**
**ऊर्ध्वजत्रुगतान् रोगान् करोति च विशेषतः ॥१५॥**

उदानस्य प्रकृतिभूतस्य स्थानादि व्यापन्नस्य च रोगान्निर्दिशन्नाह,—उदान इत्यादि । उपैति गच्छति । स्थानं पुनरनुक्तमप्यस्य [२]नाभ्युर कण्ठादि । भाषितगीतादिरिति आदिशब्दादुच्छ्वासादिविशेष । 'विशेषोऽभिप्रवर्तते' इत्यत्र केचित्तु "विषयो(ये)ऽभिप्रवर्तते" इति पठन्ति । ऊर्ध्वजत्रुगतानिति नयनवदनघ्राणश्रवणशिर सश्रयान् । चकारादन्यानपि कासादीन् करोति ॥ १४ ॥ १५ ॥

**आमपक्काशयचरः समानो वह्निसङ्गतः ॥**
**सोऽन्नं पचति तज्जांश्च विशेषान्विविनक्ति हि ॥१६॥**
**गुल्माग्निसादातीसारप्रभृतीन् कुरुते गदान् ॥**

पाक पक्कं नपुंसके भावे क्त, आमस्य पक्कमामपक्कं, तस्याशय' पच्यमानाहाराशय इत्यर्थः, तत्र चरतीति आमपक्काशयचर' । वह्निसङ्गत इत्यत्राग्निसहायवानिति केचित् पठन्ति, तत्रापि स एवार्थ । सोऽन्नं पचतीत्यग्निसन्धुक्षणाद्भक्तकार इव । तज्जान् अन्नपाकजान् । विशेषान् रसदोषमूत्रपुरीषाणि, विविनक्ति पृथक् करोति ॥ १६ ॥—

**कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः ॥ १७ ॥**
**स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि ॥**
**क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान् ॥ १८ ॥**

रससवहनोद्यत इत्यत्रादिशब्दो द्रष्टव्य, तेन रसादिसवहनोद्यत इत्यर्थ, सवहनं प्रेरणम् । पञ्चधा चेष्टयत्यपीति प्रसारणाकुञ्चनविनमनोन्नमनतिर्यग्गमनानि पञ्च चेष्टा; अन्ये तु गतिप्रसारणोत्क्षेपणनिमेषोन्मेषै पञ्चभिः प्रकारैः पञ्चधेति व्याख्यानयन्ति । सर्वदेहगान् ज्वरातीसाररक्तपित्तप्रभृतीन् ॥ ॥ १७ ॥ १८ ॥

**पक्काधानालयोऽपानः काले कर्षति चाप्ययम् ॥**
**समीरणः शकृन्मूत्रशुक्रगर्भार्तवान्यधः ॥ १९ ॥**

१ अय पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

१ 'देहधारणात्' इति पा० ।
२ 'नाभ्युर कण्ठानि' इति पा० ।

क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ॥

पक्वाधानालयः पक्वाशयस्थान इत्यर्थः । वस्त्याश्रयानश्मर्यादीन्, गुदाश्रयान् भगन्दरादीन् ॥ १९ ॥—

शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजाः ॥ २० ॥

इदानीमुपलक्षणार्थं विकृतवातद्वयादिकर्म दर्शयन्नाह,—शुक्रदोषप्रमेहास्त्वित्यादि । शुक्रस्य सर्वाङ्गगतत्वात् प्रमेहस्य सर्वदेहगतरसादिदूष्यप्रभवत्वाद्व्यानकृतत्वं, मेढ्रद्वारसंश्रितत्वादपानकृतत्वं च ॥ २० ॥

युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम्

तेषां पञ्चानां युगपत् प्रकोपे नियमेन देहनाशं दर्शयन्नाह,—युगपदित्यादि ।—युगपदेककालमित्यर्थः । भेदोऽत्र देहविनाशोऽभिप्रेतः ॥—

अत ऊर्ध्वं प्रवक्ष्यामि नानास्थानान्तराश्रितः[1] ॥२१॥
बहुशः कुपितो वायुर्विकारान् कुरुते हि यान् ॥
वायुरामाशये क्रुद्धश्छर्द्यादीन् कुरुते गदान् ॥ २२ ॥
मोहं मूर्च्छां पिपासां च हृद्ग्रहं पार्श्ववेदनाम् ॥
पक्वाशयस्थोऽन्त्रकूजं शूलं नाभौ करोति च ॥ २३ ॥
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥
श्रोत्रादिष्विन्द्रियवधं कुर्यात् क्रुद्धः समीरणः ॥२४॥

अत इत्यादि । नानास्थानान्तराश्रितः कुपितः सन् वायुर्बहुशो यान् विकारान् कुरुते तान् प्रवक्ष्यामीति संबन्धः । छर्द्यादीनिति आदिशब्दाद्रुज पार्श्वोदरहृत्स्तम्भतोदादिका ग्राह्या, अथवा ऊर्ध्वगरक्तपित्तादिकाः । मोहो नैवात्यन्तं चित्तनाशः । मूर्च्छा चेतनाच्युतिः । पक्वेत्यादि अन्त्रकूजं अन्त्रेऽव्यक्तशब्दम् । चकाराद्वातविण्मूत्रसङ्गं जङ्घोरुत्रिकपार्श्वपृष्ठादीन् प्रति शूलं च कुरुते । शूलं नाभावित्यत्र शूलानाहाविति केचित् पठन्ति, व्याख्यानयन्ति च—पक्वाशय आनह्यते समन्ताद्विवध्यत इवेति वेदनाप्रकार एक आनाह, द्वितीयस्तु विसूचिकाप्रतिषेधे प्रोक्तलक्षण एव । श्रोत्रादिषु क्रुद्धः सन् समीरण इन्द्रियवधं कुर्यादिति संबन्धः । श्रोत्रादिषु श्रोत्रघ्राणदर्शनरसनत्वक्षु, इन्द्रियवधमित्यनेनाश्रुत्यघ्राणादर्शनारसनास्पर्शानि वेदितव्यानि २१—२४

वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमुचुमायनम् ॥
त्वक्स्थो निस्तोदनं कुर्यात् त्वग्भेदं परिपोटनम् २५
व्रणांश्च रक्तगो, ग्रन्थीन् सशूलान् मांससंश्रितः ॥
तथा मेदःश्रितः कुर्याद्ग्रन्थीन्मन्दरुजोऽव्रणान् ॥२६॥
कुर्यात्सिरागतः शूलं सिराकुञ्चनपूरणम् ॥
स्नायुप्राप्तः स्तम्भकम्पौ शूलमाक्षेपणं तथा ॥ २७ ॥
हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ॥
अस्थिशोषं च भेदं च कुर्याच्छूलं च तच्छ्रितः ॥२८॥
तथा मज्जगते रुक् च न कदाचित् प्रशाम्यति ॥
अप्रवृत्तिः प्रवृत्तिर्वा विकृता[1] शुक्रगेऽनिले ॥ २९ ॥

त्वक्स्थो रसस्थः समीरणो वैवर्ण्यादि कुर्यादिति संबन्धः । सुप्ति स्पर्शाज्ञानम् । चुमुचुमायनं सर्षपकल्कावलिप्तानामिवाङ्गाना वेदनाम् । त्वग्भेद त्वचो भेदमेव । परिपोटनं सर्वतः पुटनं त्वच एव । व्रणाश्च रक्तगः कुर्यादिति शेषः । अमुं पाठ केचिन्न पठन्ति, तन्न, गयदासाचार्यस्य समतत्वात् । ग्रन्थीन् सशूलान् माससमाश्रितः समीरण इति संबन्धः । अव्रणान् व्रणरहितान् । सिराकुञ्चनं कुटिला सिरेति लोके वदन्ति । स्तम्भो निश्चलीकरणम् । आक्षेपणं चालनम् । हन्तीत्यादि एतेनाकुञ्चनप्रसारणयोरभाव उक्तः । तच्छ्रित इति अस्थ्याश्रित इत्यर्थः । तथा मज्जगते यथाऽस्थ्याश्रितोऽस्थिशोषं तथा मज्जाश्रितो मज्जशोषं कुर्यादित्यर्थः । किंविशिष्टा प्रवृत्तिरित्याह—विकृता अतिशीघ्रातिमन्दग्रथितविवर्णादियुक्तेत्यर्थः ॥ २५—२९ ॥

हस्तपादशिरोधातूंस्तथा संचरति क्रमात् ॥
व्याप्नुयाद्वाऽखिलं देहं वायुः सर्वगतो नृणाम् ॥३०॥
स्तम्भनाक्षेपणस्वापशोफशूलानि सर्वगः ॥

एकाङ्गगत एकधातुगतो वाऽप्युपेक्षितः सर्वाङ्गगतः सर्वधातुगतो वा भवतीति दर्शयन्नाह—हस्तेत्यादि । वायुस्तथा हस्तपादशिरः क्रमात् संचरति यथाऽखिलं देह व्याप्नुयात्, तथा उपेक्षितः सन् धातून् क्रमात् संचरति यथा सर्वगतो वा भवति सर्वधातुगतो भवतीत्यर्थः । व्याप्नुयाद्वेति वाशब्दो भिन्नक्रमे, सर्वगतो वेत्यत्र द्रष्टव्यः । तस्येदानीं सर्वाङ्गगतस्य लिङ्गं दर्शयन्नाह,—स्तम्भनेत्यादि । सर्वगो वायुः सर्वस्मिन् शरीरे स्तम्भनादिकं करोति ॥ ३० ॥—

स्थानेषूक्तेषु संमिश्रः संमिश्राः कुरुते रुजः ॥ ३१ ॥

तस्य वायोः प्रसरणे पित्तादिसंयुक्तस्य पित्ताद्यावरणप्रतिपत्तिहेतुं दर्शयन्नाह,—स्थानेष्वित्यादि । मिश्रः पित्तादिभिः । पित्तादीनामौष्ण्यादिस्वभावलिङ्गदर्शनाद्दाहादिकार्यलिङ्गदर्शनाच्च पित्ताद्यावरणं ज्ञेयं, केवलस्य वायोः शीतस्वभावत्वाद्दाह पित्तं विना नोत्पद्यत इति ॥ ३१ ॥

कुर्यादवयवप्राप्तो मारुतस्त्वसितान् गदान् ॥

तस्येदानीमवयवगतस्यानेकरोगकारणत्वं दर्शयन्नाह,—कुर्यादित्यादि ॥—

दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥ ३२ ॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ॥
सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता ॥ ३३ ॥
शेषाः पित्तविकाराः स्युर्मारुते शोणितान्विते ॥
प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥ ३४ ॥

१ 'नानास्थानान्तराश्रितान्' इति पा० ।

१ 'विकृतिः' इति पा० ।

दौर्बल्यं सदनं तन्द्रा वैवर्ण्यं च कफावृते ॥
उदाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ॥ ३५ ॥
अस्वेदहर्षौ मन्दोऽग्निः शीतस्तम्भौ कफावृते ॥
समाने पित्तसंयुक्ते स्वेददाहौष्ण्यमूर्च्छनम् ॥ ३६ ॥
कफाधिकं च विण्मूत्रं रोमहर्षः कफावृते ॥
अपाने पित्तसंयुक्ते दाहौष्ण्ये स्यादसृग्दरः ॥ ३७ ॥
अधःकायगुरुत्वं च तस्मिन्नेव कफावृते ॥
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ ३८ ॥
गुरूणि सर्वगात्राणि स्तम्भनं चास्थिपर्वणाम् ॥
लिङ्गं कफावृते व्याने चेष्टाः स्तम्भस्तथैव च ॥ ३९ ॥

इदानीं संमिश्राः कुरुते रुज इति सूत्रितमावरणं विवृण्वन्नाह,—दाहेत्याहि । दाहोऽग्निदग्धस्येव, सन्तापो घर्मादिसंस्थितस्येव । शैत्यशोफेत्यादि । तस्मिन्नेव वायौ । सूचीभिरित्यादि । सदनमङ्गग्लानि । क्लमोऽनायासश्रम. । हर्षो रोमहर्षः । कफाधिकं श्लेष्मबहुलं विष्ठामूत्रम् । असृग्दर स्त्रीणामेव । अस्थिपर्वणामस्थिसन्धीनाम् । चेष्टा गमनादिका ॥ ॥ ३२—३९ ॥

प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥
रोगाध्वप्रमदामद्यव्यायामैश्चातिपीडनात् ॥ ४० ॥
ऋतुसात्म्यविपर्यासात् स्नेहादीनां च विभ्रमात् ॥
अव्यवाये तथा स्थूले वातरक्तं प्रकुप्यति ॥ ४१ ॥

सूचीभिरिव निस्तोद इत्यादिवाक्येनाप्रकुपितशोणितावृतवातस्य लक्षणमुक्त्वा, इदानी प्रकुपितशोणितावृतवातरक्तस्य प्रकोपकारणं दर्शयन्नाह,—प्रायश इत्यादि । सुकुमाराणा वातरक्त प्रकुप्यतीति सबन्ध । मिथ्याहारविहारिणामिति मिथ्या अनुचित, विहार कायवाङ्मनोव्यापार । अध्वा मार्ग, व्यायाम शरीरायासजनन कर्म । विभ्रमोऽन्यथाकरणम् । अव्यवाये मैथुनवर्जिते । केचित् प्रायश सुकुमाराणामित्यादिग्रन्थं वातरक्तं प्रकुप्यतीति यावन्न पठन्ति, चिकित्सिते पठिष्यमाणत्वात् ॥ ४० ॥ ४१ ॥

हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः
कोपं यातः कारणैः सेवितैः स्वैः ॥
तीक्ष्णोष्णाम्लक्षारशाकादिभोज्यैः
सन्तापाद्यैर्भूयसा सेवितैश्च ॥ ४२ ॥
क्षिप्रं रक्तं दुष्टिमायाति तच्च
वायोर्मार्गं संरुणद्ध्याशु यातः ॥
क्रुद्धोऽत्यर्थं मार्गरोधात् स वायु-
रत्युद्रिक्तं दूषयेद्रक्तमाशु ॥ ४३ ॥

तत् संपृक्तं वायुना दूषितेन
तत्प्राबल्यादुच्यते वातरक्तम् ॥
तद्वत् पित्तं दूषितेनासृजाऽऽक्तं
श्लेष्मा दुष्टो दूषितेनासृजाऽऽक्तः ॥ ४४ ॥

तस्य संप्राप्तिं दर्शयन्नाह—हस्तीत्यादि । अन्यैश्चेति अन्यैर्भारहरणादिभिः कारणैरित्यर्थ । कोपं यात गच्छत इत्यर्थः । कारणै सेवितै स्वैर्विदाह्यादिभि । तच्च रक्तं वायोर्मार्गं सरुणद्धि । कथभूतस्य वायोरित्याह,—आशु यातः शीघ्रं गच्छत इत्यर्थ । अत्युद्रिक्तमतिशयेन वृद्धिं गतं रक्तम् । तत् सपृक्तमिति तद्रक्तं, सपृक्त ससृष्टम् । वायुना दूषितेनेति दूषितेन वायुना सह । तत्प्राबल्याद्वातप्राबल्याच्छोणितस्याप्राबल्यात्, तयोर्वातरक्तयोः प्राबल्यादिति कश्चित् । तद्वत् पित्तमिति दुष्टं पित्तमित्यर्थ., दूषितेनासृजाऽऽक्तमिति दूषितेन रक्तेन मिश्रम् ॥ ४२—४४ ॥

स्पर्शोद्विग्नौ तोदभेदप्रशोष-
स्वापोपेतौ वातरक्तेन पादौ ॥
पित्तासृग्भ्यामुग्रदाहौ भवेता-
मत्यर्थोष्णौ रक्तशोफौ मृदू च ॥ ४५ ॥
कण्डूमन्तौ श्वेतशीतौ सशोफौ
पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ॥
सर्वैर्दुष्टे शोणिते चापि दोषाः
स्वं स्वं रूपं पादयोर्दर्शयन्ति ॥ ४६ ॥

तस्येदानी वातादिविशेषेण विशिष्टलिङ्ग दर्शयन्नाह,—स्पर्शोद्विग्नावित्यादि । स्पर्शोद्विग्नौ स्पर्शासहौ पादाविति सबन्धः । प्रशोष शुष्कता, स्वाप स्पर्शाज्ञानम् । एतेन वातप्रबलवातरक्तलक्षणमुक्तम् । पित्तासृग्भ्यामिति वातशोणित एव यदा पित्तमसृक् च बलवत्तर भवति तदेत्यर्थः । रक्तशोफौ रक्तवर्णशोफौ । कण्डूमन्तौ पादाविति सबन्ध. । पीनौ स्थूलौ ॥ ४५ ॥ ४६ ॥

प्राग्रूपे शिथिलौ स्विन्नौ शीतलौ सविपर्ययौ ॥
वैवर्ण्यतोदसुप्तत्वगुरुत्वौषसमन्वितौ ॥ ४७ ॥

तस्य पूर्वरूपमाह,—प्राग्रूपे इत्यादि । सविपर्ययाविति कठिनाखिन्नोष्णौ, पादावित्यध्याहार । ओषो दाह । केचिदत्र पूर्वरूपं न पठन्ति, चिकित्सायां पठिष्यमाणत्वात् ॥ ४७ ॥

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥ ४८ ॥

तस्येदानी पादमात्रेऽभिजातस्य कालेनावयवान्तरानुसरणं निर्दिशन्नाह,—पादयोरित्यादि । मूलमास्थाय कन्दं प्राप्य । आखोरित्यादि उन्दुरस्य विष मूलमास्थाय पश्चात् कुपितं सद्देहं सकलमेवानुयाति ॥ ४८ ॥

आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत् ॥

१ वातरक्तमाद लभाषाया 'गाउट' (Gout) इति नाम्ना प्रसिद्धम् ।
२ 'शोकाच्च प्रमदा०' इति पा० ।

१ 'मूलमिव मूल तलमित्यर्थ' हाराणचन्द्र. ।

**उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ॥ ४९ ॥**
**शोणितं तदसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ॥**

तस्येदानीमसाध्यादिलक्षणं दर्शयन्नाह,—आजानु स्फुटितमित्यादि । आजानुस्फुटितं जानुपर्यन्तमुच्चटितम् । प्रभिन्नं विदीर्णम् । प्रस्रुतं स्रावयुक्तम् । उपद्रवैः प्राणमांसक्षयादिभिर्यथोक्तैः[1] । आदिग्रहणादङ्गुलिवक्रतार्बुदादयोऽपि ग्राह्याः । जुष्टं सहितम् । यज्जानुपर्यन्त स्फुटितं वातप्राबल्यात्, यच्च जानुपर्यन्तं प्रभिन्नं प्रस्रुतं च पित्तरक्तप्राबल्यात्, तदप्यसाध्यमेव ॥ ४९ ॥—

**यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ॥५०॥**
**तदाक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ॥**
**मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥ ५१ ॥**

इदानीं वातरक्तमभिधायाक्षेपकमाह,—यदेत्यादि । धमन्यो नाड्य, अभ्येति व्याप्नोति । आक्षिपति चालयति । मुहुश्चर इति वारंवारं चलनशीलो वायुः, मुहुश्चरत्वेनैव मुहुर्मुहुराक्षेपणं युक्तं, अन्ये तु 'वहिश्चर' इति पठन्ति, तन्नेच्छति गयदासाचार्यः । तदाक्षेपात् देहाक्षेपात् । इदमाक्षेपकस्य सामान्यलक्षणमुक्तम् ॥ ५० ॥ ५१ ॥

**[3]सोऽपतानकसंज्ञो यः पातयत्यन्तराऽन्तरा ॥**
**कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥५२॥**
**स दण्डवत् स्तम्भयति कृच्छ्रो दण्डापतानकः ॥**
**हनुग्रहस्तदाऽत्यर्थं सोऽन्नं कृच्छ्रान्निषेवते ॥ ५३ ॥**
**धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः ॥**
**अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥ ५४ ॥**
**स्नायुप्रतानमनिलो यदाऽऽक्षिपति वेगवान् ॥**
**विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ॥ ५५ ॥**
**अभ्यन्तरं धनुरिव यदा नमति मानवः ॥**
**[7]तदाऽस्याभ्यन्तरायामं[6] कुरुते मारुतो बली ॥ ५६ ॥**
**बाह्यस्नायुप्रतानस्थो बाह्यायामं[8] करोति च ॥**
**तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ॥ ५७ ॥**
**कफपित्तान्वितो वायुर्वायुरेव च केवलः ॥**
**कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ॥ ५८ ॥**

आक्षेपकविशेषानाह,—सोपतानक इत्यादि । य आक्षेपकोऽन्तराऽन्तरा पातयति सोऽपतानक इत्यर्थः । इदं सामान्यापतानकलक्षणमुक्तं, गयदासाचार्येणापतानकलक्षणं येनापतान्यत इत्यादिवाक्येनाभिधाय व्याख्यातम् । यथा येन वायुना कर्तृभूतेन हेतुभूतेन वा पुमानपतान्यते तमो दृश्यते मोह्यते इति यावत्सोऽपतानक इति, सोऽयं हृदिस्थमनोऽधिष्ठानेन सकफेन वायुना जन्यत इति । स एवापतानकस्त्रिधा—दण्डापतानकः, अन्तरायाम, वहिरायामश्च, तत्र दण्डापतानकलक्षणमाह,—कफान्वित इत्यादि । तास्वेव सर्वासु धमनीषु भृशं तिष्ठतीति सबन्धः । कृच्छ्रः कष्टसाध्यः । हनुग्रहस्तु दण्डापतानकेऽन्यत्रापि वायौ[1] स्यात् । स दण्डापतानकवान् पुरुषः । धनुःस्तम्भसंज्ञकमन्तरायामं दर्शयन्नाह,—धनुस्तुल्यमित्यादि । तस्यैव भाष्यं वक्तुमाह,—अङ्गुलीत्यादि । अङ्गुल्योऽत्र पादाङ्गुल्यः[2], गुल्फः पादपार्श्वयोरुपरिग्रन्थिः, जठरमुदरं, हृत् हृदय, वक्षः स्तनयोरन्तरालं, गल कण्ठ, एतेषु स्थानेषु संश्रित आश्रितो वायु । स्नायुप्रतानं स्नायुविस्तारम् । वहिरायामं निर्दिशन्नाह,—वाह्यस्नायुप्रतानस्थ इत्यादि । वाह्यस्नायुप्रतानस्थो वाह्यस्नायुविस्तारस्थ, वाह्यस्नायव पादमूलपिण्डिकाकटीपृष्ठग्रीवापश्चिमभागाश्रयाः । वक्ष कट्यूरुभञ्जनमिति वक्षःकट्यूरुभञ्जनत्वे सत्येवासाध्यत्वम्, अभग्नवक्ष कट्यादिकस्तु नरं[3] उपक्रम्य एव । तस्याक्षेपकस्येतरदोषस्य संसर्गेण निदानविशेषाच्च संख्याभेदं दर्शयन्नाह,—कफपित्तान्वित इत्यादि । एकः कफान्वितः, द्वितीयः पित्तान्वित, तृतीयः केवलवातकृतः, चतुर्थोऽभिघातजः । चतुर्थमभिघातजमिति निदानविशेषात् । दण्डापतानकादयस्त्रयश्चतुर्थ पुनरभिघातज इति श्रीजेज्झटाचार्य, तन्नेच्छति गयदासाचार्यः, गर्भपातनादिनिमित्तभेदेन संख्यातिरेकात् । श्रीब्रह्मदेवस्त्वाक्षेपकश्चतुर्धा—अपतानकः, संसृष्टाक्षेपकः, केवलाक्षेपक, अभिघातजश्च, तत्रापतानकः सोऽपतानकेत्यादिना वक्षःकट्यूरुभञ्जनमिति पर्यन्तेनोक्तः, कफान्वितो वायुरिति संसृष्टाक्षेपक, वायुरेव च केवल इति केवलाक्षेपक, चतुर्थः पुनरभिघातज इत्याह ॥ ५२—५८ ॥

**गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ॥**
**अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ ५९ ॥**

तस्यैवाक्षेपकस्यापतानकसंज्ञा प्राप्तस्यासाध्यत्वं दर्शयन्नाह,—गर्भपातनिमित्तश्चेत्यादि । गर्भपातादिनिमित्तास्त्रयोऽप्यागन्तवोऽसाध्याः, यदि कथंचिद्दैवयोगात् सिध्यन्ति तदा वैकल्यं जनयन्ति ॥ ५९ ॥

**अधोगमाः सतिर्यग्गा धमनीरूर्ध्वदेहगाः ॥**

---

१ महावातव्याध्यध्यायोक्तैरित्यर्थ ।
२ आक्षेपकरोगो युनानीवैद्यके 'तश्नुज' इति नाम्ना, आङ्गलभाषाया च 'कन्भल्शन्स (Convulsions)' इति नाम्ना प्रसिद्ध ॥
३ अपतानक आङ्गलभाषाया 'टिटेनस' (Tetanus) इति नाम्ना प्रसिद्धः ॥
४ दण्डापतानक—प्लेनोस्थोटोनस (Plenosthotonos).
५ हनुग्रह—ट्रिस्मस् लॉक् जो (Trismus Lock Jow).
६ अन्तरायामः—एम्प्रोस्थोटोनस (Emprosthotonos).
७ 'तदा सोऽभ्यन्तरायामं' इति पा० ।
८ वाह्यायामः—ओपिस्थोटोनस (Opisthotonos).

१ 'वायो' इति पा० ।
२ 'पादगता' इति पा० ।
३ 'नव' इति पा० ।
४ 'धमन्योऽत्र स्नायवः माद्वत्वेनाभिहिता', स्नायूनामेव सन्धिबन्धनेष्वधिकृतत्वात्; यदुक्तं शारीरे पञ्चमे 'शरीरेऽस्मिन् यावन्तः सन्धयः स्मृता । स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः' इति गयदासः ।

**यदा प्रकुपितोऽत्यर्थं मातरिश्वा प्रपद्यते ॥ ६० ॥**
**तदाऽन्यतरपक्षस्य सन्धिबन्धान् विमोक्षयन् ॥**
**हन्ति पक्षं तमाहुर्हि पक्षाघातं भिषग्वराः ॥ ६१ ॥**
**यस्य कृत्स्नं शरीरार्धमकर्मण्यमचेतनम् ॥**
**ततः पतत्यसून् वाऽपि जहात्यनिलपीडितः ॥ ६२ ॥**

पक्षाघातमाह,—अधोगमा इत्यादि । एकतरशरीरार्धधमनीरूर्ध्वाधस्तिर्यग्गता यदा स मातरिश्वा वायु , प्रपद्यते आश्रयतीत्यर्थः, तदाऽन्यतरपक्षस्यैकतरशरीरार्धस्य, ( सन्धिबन्धान् ) विमोक्षयन् विमोचयन्, पक्षं शरीरार्धं हन्ति । यस्य कृत्स्नमित्यादि । अकर्मण्यमीषत्कर्मक्षमं, अचेतनमल्पचेतन, यदाऽकर्मण्यं भवति तदा पतति, यदाऽचेतनं भवति तदाऽसून् प्राणान् परित्यजति ॥ ६०—६२ ॥

**शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ॥**
**साध्यमन्येन संसृष्टमसाध्यं क्षयहेतुकम् ॥ ६३ ॥**

पक्षाघातस्य साध्यासाध्यत्वं दर्शयन्नाह,—शुद्धवातहतमित्यादि । शुद्ध कफाद्यसंसृष्ट । अन्येन संसृष्टमितरदोषसंबद्धम् ॥ ६३ ॥

**वायुरूर्ध्वं व्रजेत् स्थानात् कुपितो हृदयं शिरः ॥**
**शङ्खौ च पीडयत्यङ्गान्याक्षिपेन्नमयेच्च सः ॥ ६४ ॥**
**निमीलिताक्षो निश्चेष्टः स्तब्धाक्षो वाऽपि कूजति ॥**
**निरुच्छ्वासोऽथवा कृच्छ्रादुच्छ्वस्यान्नष्टचेतनः ॥६५॥**
**स्वस्थः स्याद्धृदये मुक्ते ह्यावृते तु प्रमुह्यति ॥**
**कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः ॥ ६६ ॥**

अपतन्त्रकमाह—वायुरूर्ध्वमित्यादि । हृदयं शिर शङ्खौ च पीडयतीति हृदय कमलमुकुलाकारमधोमुख, भ्रुवोरन्ते कर्णललाटयोर्मध्ये शङ्खौ, अङ्गानि हस्तपादादीनि । आक्षिपेत् चालयेत् । कूजति कपोत इव शब्दं करोति, अथवा कृच्छ्रादुच्छ्वस्यादिति कष्टेनोच्छ्वास कुर्यात् । केचिदपतन्त्रकममु न पठन्ति, अपतन्त्रकापतानकयोरैक्यात् ॥ ६४—६६ ॥

**दिवास्वप्नासनस्थानविकृताध्वनिरीक्षणैः ॥**
**मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः ॥६७॥**

मन्यास्तम्भमाह,—दिवास्वप्नेत्यादि । आसनमुपवेशन, स्थानमूर्ध्वीभवनम । विकृताध्वनिरीक्षणं वक्रमार्गावलोकनं । स एव वायु । मन्यास्तम्भं केचिदपतानकपूर्वरूपं मन्यन्ते ॥६७॥

**गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये ॥**
**उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ॥ ६८ ॥**
**हसतो जृम्भतो भाराद्विषमाच्छयनादपि ॥**
**शिरोनासोष्ठचिबुकललाटेक्षणसन्धिगः ॥ ६९ ॥**
**अर्दयित्वाऽनिलो वक्त्रमर्दितं जनयत्यतः ॥**
**वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥ ७० ॥**
**शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ॥**
**ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥७१॥**
**यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ॥**
**वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥**
**तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ॥ ७२ ॥**

अर्दितमाह,—गर्भिणीत्यादि । सूतिका प्रसूता स्त्री । व्याहरत शब्द कुर्वत । विषमाद्भारात् विषमाच्च शयनादित्यर्थः । अन्ये तु विषमाच्छ्वसनादिति पठन्ति । अर्दयित्वा व्यथयित्वा । अपवर्तते वक्रीभवति । वाक्सङ्गो वाचोऽनिर्गमः । नेत्रादीनामित्यादिशब्दात् भ्रूगण्डाद्युपसंग्रह । तस्मिन् पार्श्वे इति यस्मिन् पार्श्वेऽर्दितं भवति तस्मिन् पार्श्वे ग्रीवादयो वक्रीभवन्ति । चिबुकं मुखकुहरस्याधोभाग । तस्य (पूर्व)रूपमाह,—यस्येत्यादि । अग्रज पूर्वभावी । आविलं समलम् । वायुरूर्ध्वं प्रसर्पतीति शेष । त्वचि स्वापः त्वच स्पर्शाज्ञानम् ॥ ६८—७२ ॥

**क्षीणस्यानिमिषाक्षस्य प्रसक्तं सक्तभाषिणः ॥**
**न सिध्यत्यर्दितं बा(गा)ढं त्रिवर्षं वेपनस्य च ॥७३॥**

तस्यासाध्यत्वमाह,—क्षीणस्येत्यादि । अनिमिषाक्षस्य स्तब्धाक्षस्य, प्रसक्तं सततं, सक्तभाषिण पीडिताव्यक्तपदभाषिण ; अन्ये तु 'प्रसक्ताव्यक्तभाषिण' इति पठन्ति, प्रसक्तं प्रकर्षेण लग्नमिति तत्रार्थ । बाढमतिशयेन न सिध्यतीति सम्बन्ध । त्रिवर्षमिति संवत्सरत्रयातीतम् । अन्ये तु नासाक्षिमुखस्राविणं त्रिवर्षमाहु । वेपनस्य कम्पनशीलस्य । "गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये" इत्यमु पाठं श्रीजेज्झटादय आचार्या न पठन्ति । उच्चैर्व्याहरतोऽत्यर्थमित्यादि (दौ) कृत्वा पठन्ति, बहुवैद्यपठितत्वादस्माभि पठित ॥ ७३ ॥

**पार्ष्णिप्रत्यङ्गुलीनां तु कण्डरा याऽनिलार्दिता ॥**
**सक्थ्नः क्षेपं निगृह्णीयाद्गृध्रसीति हि सा स्मृता ॥**

---

१ पक्षाघातो युनानीवैद्यके 'फालिज' इति नाम्ना, आङ्ग्लभाषाया च 'हेमिप्लेजिया' ( Hemiplegia ) इति नाम्ना प्रसिद्ध ॥

२ 'तदा' इति पा० ।

३ अपतन्त्रको युनानीवैद्यके 'इखतीनाक उल रहम' इति नाम्ना, आङ्ग्लभाषाया च 'हिस्टेरिया' (Hysteria) इति नाम्ना प्रसिद्ध ॥

४ 'भ्रुवोरन्तयोरुपरि' इति पा० ।

५ 'पातयेत्' इति पा० ।

६ 'दिवास्वप्नासमस्थानविवृ(कृ)तोर्ध्वनिरीक्षणै' इति पा० ।

७ मन्यास्तम्भ आङ्ग्लभाषाया 'रायनेक्' ( Wry-neck ) अथवा 'स्टिफनेक्' ( Stiff-neck ) इति नाम्ना प्रसिद्ध ॥

१ अर्दितरोगो युनानीवैद्यके 'लकवा' इति नाम्ना आङ्ग्लभाषाया च 'फेसियल् पॅरॅलिसिस् (Facial paralysis) इति नाम्ना प्रसिद्धः ॥

२ 'वचसोऽनिर्गम' इति पा० ।

३ 'सक्थ्नो' इति पा० ।

४ गृध्रसी युनानीवैद्यके 'वजे उल वरक' इति नाम्ना आङ्ग्लभाषाया च 'सायाटिका' ( Sciatica ) इति नाम्ना प्रसिद्धा ॥

गृध्रसीमाह,—पार्ष्णीत्यादि । या कण्डरा सक्थ क्षेपं निगृह्णीयात् सा गृध्रसीति स्मृतेति संबन्धः । पार्ष्णिर्गुल्फस्य पाश्चात्त्याधोभागः, प्रत्यङ्गुल्योऽङ्गुल्य एव, एतेनोपर्यधोभागगतं कण्डराद्वयं गृह्यते । कण्डरा महास्नायुः । गुल्फादिविटपान्तं सक्थि, तस्य क्षेपं प्रसारणं निगृह्णीयादवरुन्ध्यादित्यर्थः । गृध्रसी रघिणीति लोके । सा च वातात् वातकफाच्च । खञ्जनवाते न सातिशया व्यथा यथा गृध्रस्याम् । केचित् 'पार्ष्णि प्रत्यङ्गुलीनाम्' इति द्वितीयान्तं पठन्ति; तत्रापि पार्ष्णि लक्षीकृत्य या कण्डरा, अङ्गुलीनां च या कण्डरेति कण्डराद्वयम्॥७४॥

**तलप्रत्यङ्गुलीनां तु कण्डरा बाहुपृष्ठतः ॥**
**बाह्वोः कर्मक्षयकरी विश्वाचीति हि सा स्मृता ७५**

गृध्रसीसदृशीमेकबाहुगता विश्वाचीमाह,—तलेत्यादि । तलशब्दोऽयमुपरि वर्तते, तेन करस्याभ्यन्तरकण्डरा गृहीता, बाहुपृष्ठत इत्यनेन बाह्यकण्डरा गृहीता । बाह्वोरिति द्विवचनं सामान्यापेक्षया, कदाचित् कस्मिंश्चिद्बाहौ भवति । अनिलादितेत्यत्रापि सवध्यते । चकारोऽत्र गृध्रसीविश्वाच्योर्नामान्तरमनुक्तं खल्वभिधानं समुच्चिनोति । अन्ये त्वत्रापि 'तलं प्रत्यङ्गुलीनाम्' इति पूर्ववद्द्वितीयान्तं पठन्ति, तेन तलं लक्षीकृत्य या कण्डरा बाहुपृष्ठतश्च या कण्डरेति कण्डराद्वयं गृह्यते ॥ ७५ ॥

**वातशोणितजः शोफो जानुमध्ये महारुजः ॥**
**शिरः क्रोष्टुकपूर्वं तु स्थूलः क्रोष्टुकमूर्धवत् ॥ ७६ ॥**

क्रोष्टुकशिर आह,—वातेत्यादि । यो जानुमध्ये वातशोणितजो महारुजः क्रोष्टुकमूर्धवत् स्थूलः शोफो भवति स क्रोष्टुकशिर इति ज्ञेयः । वातशोणितज इति वातशोणिताभ्यां जातो वातशोणितजः, न पुनर्वातरक्तेन व्याधिना जनितः, अन्ये तु वातेन शोणितेन च जात इति नेच्छन्ति, किं तर्हि वातरक्तज इति रोगकारणमेव रोगमिच्छन्ति । शिरः क्रोष्टुकपूर्वमिति क्रोष्टुकशब्दपूर्वं शिरः, तस्य रोगस्य 'क्रोष्टुकशिर' इति नामेत्यर्थः । क्रोष्टुकमूर्धवत् शृगालमस्तकवत् ॥ ७६ ॥

**वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥**
**खञ्जस्तदा भवेज्जन्तुः, पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥७७॥**

खञ्जपङ्गुलवातावाह,—वायुरित्यादि । आक्षिपेदिति ईषत् क्षिपेत्, खञ्जे विकलगतेर्दर्शनात् । सक्थ्नोर्द्वयोर्वधादिति सर्वथा गतिविघातात् पङ्गुरित्यर्थः । द्वयोरिति पुनरुक्तिप्रसङ्गाद्युगपत् सक्थिद्वयवधादित्यर्थः ॥ ७७ ॥

**प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति ॥**
**कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ७८ ॥**

कलायखञ्जमाह,—प्रक्रामन्नित्यादि । प्रक्रामन् पादविक्रमं कुर्वन्, गमनारम्भ एव वेपते कलायखञ्ज इत्ययं खञ्जाद्विशेषः । मुक्तसन्धिप्रबन्धनमिति शिथिलसन्धिबन्धनमित्यर्थः ॥ ७८ ॥

**न्यस्ते तु विषमं (मे) पादे रुजः कुर्यात्समीरणः ॥**
**वातकण्टक इत्येष विज्ञेयः खुडु(ल)काश्रितः ॥७९॥**

वातकण्टकमाह,—न्यस्त इत्यादि । न्यस्ते तु विषमं पाद इति विषमस्थाने निक्षिप्ते पादे इत्यर्थः । खुडु(ल)काश्रित इति पादजङ्घासन्धिसंश्रय इत्यर्थः, पार्ष्ण्याश्रय इत्यन्ये ॥ ७९ ॥

**पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥**
**विशेषतश्चङ्क्रमणात्पाददाहं तमादिशेत् ॥ ८० ॥**

पाददाहमाह,—पादयोरित्यादि । विशेषतश्चङ्क्रमणादिति विशेषेण गच्छतः, तिष्ठतस्तु सामान्येन ॥ ८० ॥

**हृष्यतश्चरणौ यस्य भवतश्च प्रसुप्तवत् ॥**
**पादहर्षः स विज्ञेयः कफवातप्रकोपजः ॥ ८१ ॥**

पादहर्षमाह,—हृष्यत इत्यादि । हृष्यत इति हर्षो रोमाञ्चप्रायो वेदनाविशेषोऽन्तःशीतकरः । भवतश्च प्रसुप्तवदिति स्पर्शाज्ञानात् सुप्ताविव भवत इत्यर्थः ॥ ८१ ॥

**अंसदेशस्थितो वायुः शोषयित्वासबन्धनम् ॥**
**सिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम् ॥ ८२ ॥**

असशोषाववाहुकावाह,—असदेशेत्यादि । अससमीपोपलक्षितो देशोऽसदेशः, असो बाहुशिरः । असबन्धनं श्लेष्माणमित्यर्थः । असबन्धनं शोषयित्वा 'असशोषं रोगं करोति' इति वाक्यशेषो ज्ञेयः । तत्रस्थोऽसदेशस्थित इत्यर्थः ॥ ८२ ॥

**यदा शब्दवहं स्रोतो वायुरावृत्य तिष्ठति ॥**
**शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्यं तेन जायते ८३**

बाधिर्यमाह,—यदेत्यादि । शुद्ध केवल । अपिशब्दाद्रक्तपित्तावरणयोरुपसंग्रहः । यद्यप्ययं व्याधिः शालाक्येऽपि पठ्यते, तथाऽप्यत्रापि पठनीयः, वृद्धसमतत्वात् ॥ ८३ ॥

**हनुशङ्खशिरोग्रीवं यस्य भिन्दन्निवानिलः ॥**
**कर्णयोः कुरुते शूलं कर्णशूलं तदुच्यते ॥ ८४ ॥**

कर्णशूलमाह,—हनुशङ्खेत्यादि ॥ ८४ ॥

---

१ विश्वाची आङ्ग्लभाषायां 'रेडिओअल्नर् पॅरॅलिसिस्' (Radio-ulnar Paralysis) इति नाम्ना प्रसिद्धा ॥

२ क्रोष्टुकशीर्ष—इन्फ्लेम्ड नी (Inflamed knee).

३ खञ्ज—लेम् (Lame)

४ 'सक्थ्नो' इति पा० ।

५ पङ्गुत्वरोग आङ्ग्लभाषाया 'पॅरॅप्लीजिया' (Paraplegia). इति नाम्ना प्रसिद्धः ॥

१ कलायखञ्ज—लेथिरिझम् (Lathirism)

२ 'चङ्क्रमत' इति पा० ।

३ 'हृष्येते चरणौ यस्य भवेतां चापि सुप्तकौ' इति पा० ।

४ पादहर्ष—नम्नेस् ऑफ् फीट् (Numbness of feet)

५ अंसशोष—ऑस्टिओआर्थ्राइटिस् ऑफ दि शोल्डर जॉइन्ट (Osteoarthritis of the shoulder joint).

६ 'अत्र कण्डरार्थे सिराशब्दप्रयोगः' इति प्रत्यक्षशारीरोपोद्घाते गणनाथसेन ।

७ बाधिर्य—डेफ्नेस् (Deafness).

८ कर्णशूल—ओटॅल्जिआ (Otalgia).

**आवृत्य सकफो वायुर्धमनीः शब्दवाहिनीः ॥**
**नरान् करोत्यक्रियकान्मूकसिन्मिनगद्गदान् ॥ ८५ ॥**

जिह्वागतवातरोगं दर्शयन्नाह,—आवृत्येत्यादि । आवृत्य अवरुध्येत्यर्थः । मूको वचनरहितः, मिन्मिन सानुनासिकवाक्, गद्गदोऽव्यक्तवाक् ॥ ८५ ॥

**अधो या वेदना याति वर्चोमूत्राशयोत्थिता ॥**
**भिन्दतीव गुदोपस्थं सा तूनीत्यभिधीयते ॥ ८६ ॥**
**गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी ॥**
**वेगैः पक्वाशयं याति प्रतितूनीति सा स्मृता ॥८७॥**

तूनीवातमाह,—अधो येत्यादि । भिन्दतीव गुदोपस्थमिति भेदं कुर्वतीव गुदोपस्थमित्यर्थः । प्रतिलोमविसर्पिणी अध-उत्थितोर्ध्वगामिनी । वेगैरिति वेदनावेगैर्मुहुर्मुहु स्वभावोपशमोपलक्षितैः, 'प्रतिलोमं प्रधाविता' इति केचित् ॥ ८६ ॥ ८७ ॥

**साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥**
**आध्मानमिति जानीयाद्घोरं वातनिरोधजम् ॥ ८८ ॥**

आध्मानमाह,—साटोपमित्यादि । आटोपं सचलन तेन सह वर्तत इति साटोपम् । उदरमत्र पक्वाशय । घोर कष्टकारि ८८

**विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् ॥**
**प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम् ८९**

प्रत्याध्मानमाह,—विमुक्तेत्यादि । तदेव आध्मानमेव । आमाशयोत्थित नाभिस्तनान्तरोत्थितम् । अत एव हृदयपार्श्वयोरप्यधिष्ठानमस्य प्राप्त निरस्यन्नाह,—विमुक्तपार्श्वहृदयमिति । व्याकुलित आवृत ॥ ८९ ॥

**अष्ठीलावद्घनं ग्रन्थिमूर्ध्वमायतमुन्नतम् ॥**
**वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम् ॥९०॥**
**एनामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ॥**
**प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ ९१ ॥**

**इति सुश्रुतसंहितायां निदानस्थाने वातव्याधिनिदानं नाम प्रथमोऽध्यायः ॥ १ ॥**

वाताष्ठीलामाह,—अष्ठीलावदित्यादि । अष्ठीला उत्तरापथे दीर्घवर्तुलपाषाणविशेष इत्येके, चर्मकाराणा वर्तुलदीर्घा लौही भाण्डिरित्यपरे । घन सहतावयवः । आयतो दीर्घः । बहिर्मार्गाणि वातविण्मूत्रा(णाम्)णि । अन्येऽत्र 'नाभेरधस्तात् सजातं चलं वा यदि वाऽचलम्' इति पठन्ति । प्रत्यष्ठीलामाह,—एनामेवेत्यादि । एनामेव अष्ठीला, तिर्यगुत्थितत्वेनाष्ठीलायाः सकाशात् प्रत्यष्ठीलाया भेद । अस्याग्रे केचिद्रूरुस्तम्भं पठन्ति, तन्न, चिकित्साया पठिष्यमाणत्वान्निबन्धकाराणामसमतत्वाच्च ॥ ९० ॥ ९१ ॥

इति श्रीडल्हणविरचितायां निबन्धसग्रहाख्यायां सुश्रुतव्याख्याया निदानस्थाने प्रथमोऽध्यायः ॥ १ ॥

१ मूकत्व—'अॅफेजिया' (Aphasia)
२ आध्मान—१ टिम्पॅनाइटिस् (Tympanitis), २ मीटिऑरिझम् (Metiorism)

# द्वितीयोऽध्यायः ।

**अथातोऽर्शसां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथेत्यादि । निदानं हेतुलक्षणनिर्देशः ॥ १ ॥ २ ॥

**षडर्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि चेति ॥ ३ ॥**

षडर्शांसीत्यादि । ननु, वातपित्तकफशोणितसन्निपातैः सहजानि चेत्यनेनैव षट्सख्याया लब्धत्वात् कथं षडिति सख्यानिर्देशः? उच्यते—द्विदोषजनितार्शोगणनापरिहारार्थम् । यद्यपि शोणिताधिष्ठाना वातादयो रक्तार्शसमारम्भकास्तथाऽप्युपचाराच्छोणितजानीत्युच्यन्ते; यथा घृताधिष्ठानेनाग्निना दग्धे घृतदग्ध इत्युच्यते ॥ ३ ॥

**तत्रानात्मवतां यथोक्तैः प्रकोपणैर्विरुद्धाध्यशनस्त्रीप्रसङ्गोत्कटुकासनपृष्ठयानवेगविधारणादिभिर्विशेषैः प्रकुपिता दोषा एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रपद्याधो गत्वा गुदमागम्य प्रदूष्य गुदवलीर्मांसप्ररोहाञ्जनयन्ति विशेषतो मन्दाग्नेः, तथा तृणकाष्ठोपललोष्टवस्त्रादिभिः शीतोदकसंस्पर्शनाद्वा कन्दाः परिवृद्धिमासादयन्ति, तान्यर्शांसीत्याचक्षते ॥ ४ ॥**

अर्शसा हेतून् संप्राप्तिं च दर्शयन्नाह,—तत्रेत्यादि । विशेषतो मन्दाग्नेः प्रकुपिता दोषा मासप्ररोहान् जनयन्तीति संबन्धः । अनात्मवतामजितेन्द्रियाणाम् । यथोक्तैः प्रकोपणैर्बलवद्विग्रहादिक्रोधशोकादिदिवास्वप्नादिभिः । विरुद्धं बहुधा हिताहितीयोक्तम् । स्त्रीप्रसङ्ग इत्यत्र प्रशब्देनात्यन्तासक्तिः प्रतिपाद्यते । 'गुदपार्ष्णीसमायोगः प्राहुरुत्कटुकासनम्' 'उभड' (उकुड) इति लोके । यानमश्वादीना पृष्ठतः । वेगविधारणशब्देन वातविण्मूत्रादीना वेगधारणं, विरुद्धाशनशब्देन गुरुशीताभिष्यन्दिविदाह्यसात्म्यप्रमिताशनादीनि गृह्यन्ते । विशेषैर्भेदैः । तेषां निदानमभिधाय सप्राप्तिमाह,—यथोक्तमित्यादि । प्रसृता इति किण्वोदकपिष्टसमवाय इवोद्रिक्ताना प्रसरो भवतीत्यादिक्रमेण प्रसृताः । प्रधानधमनी पुरीषवाहिनी, अनु पश्चात्, प्रपद्य प्राप्य, गुदवलीरिति वलिस्त्वक्सकोचः । मन्दाग्नेर्विशेषतोऽतिशयेन मांसप्ररोहाञ्जनयन्तीति सबन्धः । तथा तृणेत्यादि । परिवृद्धिमासादयन्ति प्राप्नुवन्तीत्यर्थः । आचक्षत इति 'पूर्वाचार्याः' इत्यध्याहारः ॥ ४ ॥

**तत्र स्थूलान्त्रप्रतिबद्धमर्धपञ्चाङ्गुलं गुदमाहुः, तस्मिन् वलयस्तिस्रोऽध्यर्धाङ्गुलान्तरसंभूताः प्रवा-**

१ "वस्त्रादिसघर्षादभीक्ष्ण शीतोदकसस्पर्शनाद्वा" इति पा० ।
२ 'ऽध्यर्धाङ्गुलसमिताः' इति पा० ।

हणी विसर्जनी संवरणी चेति चतुरङ्गुलायताः; सर्वास्तिर्यगेकाङ्गुलोच्छ्रिताः ॥ ५ ॥

शङ्खावर्तनिभाश्चापि उपर्युपरि संस्थिताः ॥
गजतालुनिभाश्चापि वर्णतः संप्रकीर्तिताः ॥
रोमान्तेभ्यो यवाध्यर्धो गुदौष्ठः परिकीर्तितः ॥ ६ ॥

इदानीं गुदं गुदवलीश्च विवृण्वन्नाह,—तत्रेत्यादि । स्थूलान्त्रं कव्यन्त्रं गुदान्त्रमिति प्रसिद्धम् । अर्धपञ्चाङ्गुलमिति अर्धपञ्चममङ्गुलं यस्मिन् तत्तथा, एतेन सार्धचतुरङ्गुलप्रमाणं गुदमित्यर्थः । अध्यर्धाङ्गुलान्तरसंभूता इति सार्धैकाङ्गुलान्तरसंजाताः । तत्रोपरितनं वलिद्वयं शङ्खावर्तनिभं प्रत्येकमन्तरेण सह सार्धैकाङ्गुलं, प्रथमा तु वलिरन्तरेण विनैकाङ्गुलोच्छ्राया, अर्धाङ्गुलस्तु गुदौष्ठ ईदृशं बोद्धव्यम् । अत एव 'प्रथमा तु गुदौष्ठादङ्गुलमात्रे' इत्यग्रे वक्ष्यति । तासां नामान्याह,—प्रवाहणीत्यादि । प्रवाहयतीति प्रवाहणी, विसृजतीति विसर्जनी, संवृणोतीति संवरणी । गुदौष्ठप्रमाणमाह-रोमान्तेभ्य इत्यादि । रोमान्तेभ्यो रोमप्रान्तेभ्यः रोममालिकायाः । यवाध्यर्धः सार्धो यवः, अर्धाङ्गुलप्रमाण इत्यर्थः, अङ्गुलस्य त्रियवप्रमाणत्वात् ॥ ५ ॥ ६ ॥

प्रथमा तु गुदौष्ठादङ्गुलमात्रे ॥ ७ ॥

प्रथमा वलिर्गुदौष्ठात् कियद्दूरे भवतीत्याह,—प्रथमेत्यादि ।—प्रथमा 'वलिः' इति शेषः ॥ ७ ॥

तेषां तु भविष्यतां पूर्वरूपाणि-अन्नेऽश्रद्धा कृच्छ्रात्पक्तिरम्लीका परिदाहो विष्टम्भः पिपासा सक्थिसदनमाटोपः कार्श्यमुद्गारबाहुल्यमक्ष्णोः श्वयथुरन्त्रकूजनं गुदपरिकर्तनमाशङ्का पाण्डुरोगग्रहणीदोषशोषाणां[2] कासश्वासौ बलहानिर्भ्रमस्तन्द्रा निद्रेन्द्रियदौर्बल्यं च ॥ ८ ॥

तेषामित्यादि । भविष्यतां भवितुकामानां, अम्लीका अम्लोद्गारः, सक्थिसदनमूरुग्लानिः, स्फुटनमिवेत्येके, आटोप आध्मानं, पाण्डुरोगादीनामाशङ्का विकल्पः, कासश्वासौ भ्रमस्तन्द्रा निद्रा इन्द्रियदौर्बल्यं च 'जायते' इति शेषः ॥ ८ ॥

जातेष्वेतान्येव लक्षणानि प्रव्यक्ततराणि भवन्ति ॥ ९ ॥

तेषां सामान्यरूपमाह,—जातेष्वित्यादि । एतानि पूर्वोक्तानि ॥ ९ ॥

तत्र मारुतात्परिशुष्कारुणविवर्णानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीनाडीमुकुलसूचीमुखा[3]कृतीनि च भवन्ति; तैरुपद्रु(ह)तः सशूलं संहतमुपवेश्यते, कटीपृष्ठपार्श्वमेढ्रगुदनाभिप्रदेशेषु चास्य वेदना भवन्ति, गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव भवन्ति, कृष्णत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ १० ॥

विशिष्टरूपमाह,—तत्रेत्यादि । परिशुष्काण्यनास्रावीणि । अरुणानि ईषद्रक्तानि । विवर्णानि विविधवर्णानि, विषममध्यानि निम्नोन्नतमध्यानि, केचिदत्र विषमध्यामानीति पठन्ति व्याख्यानयन्ति च,—विषमाणि निम्नोन्नतत्वेन, ध्यामानि दग्धेष्टिकादिवत्सुवर्णानि । तुण्डिकेरी वनकार्पासिका तत्पुष्पाकृतीनि । अन्ये त्वत्र "तुण्डिकेरीनाडीमुकुलसूचीमुखसदृशानि भवन्ति" इति पठन्ति व्याख्यानयन्ति च—तुण्डिकेरी बिम्बी तस्या नाडी नालिका, मुकुलं पुष्पमुकुल, सूची सीवनद्रव्यम्, एषां मुखसदृशानि भवन्ति । उपद्रुतोऽभिभूतः । संहतं घनम् । उपवेश्यते विट्सर्गं कार्यते । गुल्मादीनि चास्य तन्निमित्तानीत्युपद्रवकथनम् ॥ १० ॥

पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि[1] जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति; तैरुपद्रु(ह)तः सदाहं सरुधिरमतिसार्यते, ज्वरदाहपिपासामूर्च्छाश्चास्योपद्रवा भवन्ति, पीतत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ ११ ॥

पित्तादित्यादि । विसर्पीणि प्रसरणशीलानि, संस्थानमाकारः । यवमध्यानीति स्फीतमध्यानि मूलाग्रयोस्तनूनि । प्रक्लिन्नानि क्लेदस्रावीणि ॥ ११ ॥

श्लेष्मजानि श्वेतानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पाण्डूनि करीरपनसास्थिगोस्तनाकाराणि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति, तैरुपद्रु(ह)तः सश्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्यते, शोफशीतज्वरारोचकाविपाकशिरोगौरवाणि चास्य तन्निमित्तान्येव भवन्ति, शुक्लत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ १२ ॥

श्लेष्मजानीत्यादि । स्थिराणि कठिनानि; पाण्डूनि धूसराणि; करीरो मरुदेशेष्वतिप्रवृद्धो वृक्षविशेषः, पनसो बहि कण्टकिफलः 'कटहल' इति लोके, तस्य फलसदृशानि; अनल्पं बहु, शीतज्वरः शीतप्रधानज्वरः ॥ १२ ॥

रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकणन्तिकाफलसदृशानि पित्तलक्षणानि च, यदाऽवगाढपुरीष(प्रवृत्ति)पीडितानि भवन्ति तदाऽत्यर्थं दुष्टमनल्पमसृक्

१ 'अत्र चतुरङ्गुलायता इति सङ्कुचितावस्थायामित्येवावधेयं, अन्यथा पुंसां नारीणां च यथाक्रममुपदेक्ष्यमाणपञ्चषडङ्गुलपरिणाहमर्शोयन्त्रमनुपपन्नं स्यात् 'स्रोतःप्रमाणापेक्षया स्थूलतरत्वात्' इति हाराणचन्द्रः ।' चतुरङ्गुला, ताः सर्वाः' इति पा० ।

२ 'ग्रणीदोषोदराणां' इति पा० ।

३ 'नाडीमुख०' इति पा० ।

१ 'पीनमध्यानि' इति पा० ।

सहसा विसृजन्ति, तस्य चातिप्रवृत्तौ शोणितातियोगोपद्रवा भवन्ति ॥ १३ ॥

रक्तजानीत्यादि । न्यग्रोधप्ररोहो वटप्ररोह, विद्रुम प्रवालः, काकणन्तिका गुञ्जा चिरिहिंटीकेति लोके, काकादनीत्यपरे । चकारेणानुबन्धभूतवातकफरूपमनुक्तमपि समुच्चीयते । शोणितातियोगोपद्रवा आक्षेपकादयः ॥ १३ ॥

सन्निपातजानि सर्वदोषलक्षणयुक्तानि ॥ १४ ॥

सर्वेषां चार्शसा यानि लक्षणानीति जेज्झट, गयदासस्तु 'सन्निपातजानि सर्वलक्षणानि' इति पठति व्याख्यानयति च—सर्वेषा वातादीना लक्षणानि स्वभावकर्मभूतानि येषु तानि॥१४॥

सहजानि दुष्टशोणितशुक्रनिमित्तानि, तेषां दोषत एव प्रसाधनं कर्तव्यं, विशेषतश्चैतानि दुर्दर्शनानि परुषाणि पाण्डूनि दारुणान्यन्तर्मुखानि; तैरुपद्रुतः कृशोऽल्पभुक् सिरासन्ततगात्रोऽल्पप्रजःक्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निप्राणः परमलसश्च तथा घ्राणशिरोऽक्षिनासाश्रवणरोगवान्, सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ॥१५॥

शरीरेण सह जातानामर्शसा दोषेभ्यो भिन्नहेतुं दर्शयन्नाह,—सहजानीत्यादि ।—दुष्टशोणितशुक्रनिमित्तानि, गर्भगुदारम्भकमात्र बीजं दुष्टं न सर्व, सर्वदुष्टत्वे हि प्रजोत्पत्तिरेव न स्यात् । तेषा दोषत एव प्रसाधनं कर्तव्यमिति येन दोषेण यस्य शुक्रशोणितं दूषितं भवेत्तस्य दोषस्य लक्षणवर्णवेदनाकृतिभि प्रसाधनं विज्ञानमित्येके, अन्ये तु दोषत इति दोषलिङ्गं समीक्ष्य प्रसाधनं चिकित्सेत्याहु । दुर्दर्शनानि दु खेन दृश्यन्ते, अन्तर्विद्रधिवदित्यर्थः । पाण्डूनि धूसराणि । दारुणानि अतिदु खकराणि ॥१५॥

भवति चात्र ।

वाह्यमध्यवलिस्थानां प्रतिकुर्याद्भिषग्वरः ॥
अन्तर्वलिसमुत्थानां प्रत्याख्यायाचरेत् क्रियाम् १६

स्थानाश्रयं साध्यादित्वं दर्शयन्नाह,—भवति चात्रेत्यादि । अन्तर्वलिरभ्यन्तरवलिः। प्रत्याख्याय असाध्यान्येतान्यर्शांसीति निराकृत्य ॥ १६ ॥

प्रकुपितास्तु दोषा मेढ्रमभिप्रपन्ना मांसशोणिते प्रदूष्य कण्डूं जनयन्ति, ततः कण्डूयनात् क्षतं समुपजायते, तस्मिंश्च क्षते दुष्टमांसजाः प्ररोहाः पिच्छिलरुधिरस्राविणो जायन्ते कूर्चकिनोऽभ्यन्तरमुपरिष्टाद्वा, ते तु शेफो विनाशयन्त्युपघ्नन्ति च पुंस्त्वं; योनिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलरुधिरस्राविणश्छत्राकारान् करीराञ्जनयन्ति, ते तु योनिमुपघ्नन्त्यार्तवं च; नाभिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलान् गण्डूपदमुखसदृशान् करीरान् जनयन्ति; त एवोर्ध्वमागताः श्रोत्राक्षिघ्राणवदनेष्वर्शांस्युपनिर्वर्तयन्ति; तत्र कर्णजेषु बाधिर्यं शूलं पूतिकर्णता च, नेत्रजेषु वर्त्मावरोधो वेदना स्रावो दर्शननाशश्च, घ्राणजेषु प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखं च; वक्त्रजेषु कण्ठौष्ठतालूनामन्यतमस्मिंस्तैर्गद्गदवाक्यता रसाज्ञानं मुखरोगाश्च भवन्ति ॥ १७ ॥

मेढ्रादिष्वर्शास्याह,—प्रकुपितास्त्वित्यादि । अभिप्रपन्ना आश्रिता, कूर्चकिन. सूक्ष्मदीर्घाङ्कुरसन्ततिन. । अभ्यन्तरमिति मणौ । उपरिष्टादिति वाह्यचर्मणि । पुंस्त्वं शुक्रं पुंश्चिह्नं च । योनिमभिप्रपन्ना इत्यादि अभिप्रपन्ना दोषा इति संवन्ध. । करीरानङ्कुरान् । नाभिमभिप्रपन्ना इत्यादि दोषा इत्यत्रापि सवध्यते । त एव दोषा इत्यर्थ । उपनिर्वर्तयन्ति जनयन्तीत्यर्थ । तत्रेत्यादि । वर्त्मावरोध इति वर्त्माक्षिपुट । घ्राणजेष्वित्यादि । क्षवथुश्छिक्का । वक्त्रजेष्वित्यादि । अन्यतमस्मिन् एकतमस्मिन्, 'उत्पन्नेष्वर्श सु' इति शेष ॥ १७ ॥

व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य वहिः स्थिराणि कीलवदर्शांसि निर्वर्तयति, तानि चर्मकीलान्यर्शांसीत्याचक्षते ॥ १८ ॥

त्वगधिष्ठानमेव चर्मकीलाख्यमर्शो दर्शयन्नाह,—व्यानस्त्वित्यादि । वहि गुदौष्ठाद्बहिः; अन्ये तु वहि शब्देनान्यत्रापीति कथयन्ति । कीलवत् शङ्कुतुल्यानीत्यर्थ ॥ १८ ॥

भवन्ति चात्र ।

तेषु कीलेषु निस्तोदो मारुतेनोपजायते ॥
श्लेष्मणा तु सवर्णत्वं ग्रन्थित्वं च विनिर्दिशेत् ॥१९॥
पित्तशोणितजं रौक्ष्यं कृष्णत्वं शुक्लता तथा ॥
समुदीर्णखरत्वं च चर्मकीलस्य लक्षणम् ॥ २० ॥

तेषा चर्मकीलाना दोषलिङ्गमाह,—भवन्ति चात्रेत्यादि । सवर्णत्वमिति श्लेष्मण. समानवर्णत्वमित्यर्थ । ग्रन्थित्वं ग्रन्थिभाव । पित्तेत्यादि । तेषु चर्मकीलेषु । रौक्ष्यमित्यादि पित्तशोणितजं विनिर्दिशेत् । समुदीर्णखरत्वमतीव कठिनत्वम् । चर्मकीलस्य लक्षणमिति एतद्वातादिदोषतश्चर्मकीलस्य लक्षणमुक्तम् । केचिच्चर्मकीलानां दोषलिङ्गं न पठन्ति ॥ १९ ॥ २० ॥

अर्शसां लक्षणं व्यासादुक्तं सामान्यतस्तु यत् ॥
तत्सर्वं प्राग्विनिर्दिष्टात्साधयेद्भिषजां वरः ॥ २१ ॥

इदानीं सर्वेषामेव मेढ्रादिजाना वातादिलक्षणमतिदेशेन निर्दिशन्नाह,—अर्शसामित्यादि । अर्शसा मेढ्रादिजानां वातादिलक्षणं

१ 'स्थानेष्वर्श सु' इति पा० ।
२ 'कृष्णरक्तत्व स्निग्धता तथा' इति पा० ।
३ 'श्लक्ष्णता' इति पा० ।
४ 'सक्षेपतस्तु' इति पा० ।

विना यत् संक्षेपतो लक्षणमुक्तं तत् सर्वं साधयेत् जानीयात् चिकित्सेद्वा । कथमित्याह,—प्राग्विनिर्दिष्टादिति; प्राक् पूर्वं व्यासेन प्रत्येकं वातादिजार्शोलक्षणमुक्तं वीक्ष्येत्यर्थ इति गयदासाचार्य ; अन्ये तु संक्षेपत षोढा, व्यासतो विस्तरेण प्राग्विनिर्दिष्टात् पञ्चदशधाप्रसरात् साधयेदिति मन्यन्ते ॥ २१ ॥

**अर्शःसु दृश्यते रूपं यदा दोषद्वयस्य तु ॥**
**संसर्गं तं विजानीयात् संसर्गः स च षड्विधः ॥२२॥**

इदानीं षड्विधेष्वेवार्शःस्वत ऊर्ध्वं संसर्गमौषधकल्पनार्थं दर्शयन्नाह,—अर्शःस्वित्यादि । संसर्ग स च षड्विध इति वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते, एवं संसर्ग' षड्विध. । स च सूत्रस्थानोक्तवर्णवेदनालक्षणादवगन्तव्य[1] ॥ २२ ॥

**त्रिदोषाण्यल्पलिङ्गानि याप्यानि तु विनिर्दिशेत् ॥**
**द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ॥२३॥**
**कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥**
**सन्निपातसमुत्थानि सहजानि तु वर्जयेत् ॥ २४ ॥**

इदानीं याप्यकृच्छ्रसाध्यासाध्यान्यर्शांसि दर्शयन्नाह,—त्रिदोषाणीत्यादि । द्वन्द्वजानि द्विदोषोत्थानि, तान्यपि याप्यानीत्यर्थ. । परिसंवत्सराणीति परित' संवत्सरमभिव्याप्य स्थितानि कृच्छ्रसाध्यानीत्यर्थ' । केचित् सन्निपातसमुत्थानीत्यादि(दौ)-त्कला पठन्ति । स च पाठः समग्रोऽदर्शनान्न लिखित ॥ २३ ॥ २४ ॥

**सर्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः ॥**
**तैस्तु प्रतिहतो वायुरपानः सन्निवर्तते ॥ २५ ॥**
**ततो व्यानेन सङ्गम्य ज्योतिर्मृद्नाति देहिनाम् ॥२६॥**

सर्ववलिव्यापिनामर्शसा पञ्चात्मकस्याप्यग्नेर्महानर्थकरत्वं दर्शयन्नाह,—सर्वा इत्यादि । येषा देहिना, दुर्नामभिरर्शोभि' । तैस्तु अर्शोभिरित्यर्थ.। अपानो वायुरिति सवन्ध' । सन्निवर्तते स्थितिं बध्नाति न नि.सरतीत्यर्थ । सङ्गम्य मिलित्वा। ज्योति' पञ्चात्मकमग्निं, मृद्नाति मन्दीकरोति । अयं चोपद्रवः प्रायेण सहजेष्वर्श.सु ज्ञेय. ॥ २५ ॥ २६ ॥

**इति सुश्रुतसंहितायां निदानस्थानेऽर्शोनिदानं नाम द्वितीयोऽध्यायः ॥ २ ॥**

इति श्रीडल्हणाचार्यविरचिताया निबन्धसंग्रहाख्यायां सुश्रुतव्याख्याया निदानस्थाने द्वितीयोऽध्याय ॥२॥

---

१ 'सूत्रस्थानोक्तव्रणवेदनालक्षणात्' इति पा० ।

२ 'अर्शोरोगः युनानीवैद्यके 'बवाशीर' इति नाम्ना आङ्ग्लभाषायां च 'हिमरॉइड्स' (Hæmorrhoids) अथवा 'पाइल्स' (Piles) इति नाम्ना प्रसिद्ध. । रक्तार्श —ब्लीडिंग् पाइल्स् (Bleeding Piles)।

## तृतीयोऽध्यायः ।

**अथातोऽश्मरीणां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथेत्यादि । निदानं हेतुलक्षणनिर्देशः ॥ १ ॥ २ ॥

**चतस्रोऽश्मर्यो[1] भवन्ति श्लेष्माधिष्ठानाः; तद्यथा—श्लेष्मणा, वातेन, पित्तेन, शुक्रेण चेति ॥ ३ ॥**

चतस्र इत्यादि । चतस्रोऽश्मर्यो भवन्तीति छेद । तिस्र एव श्लेष्माधिष्ठाना शुक्राश्मरी शुक्राधिष्ठाना, अन्ये तु शुक्राश्मर्यपि श्लेष्माधिष्ठानैव, 'शुक्रं तु सौम्यं' इति वचनात् । श्लेष्माधिष्ठाना. श्लेष्मोपादानकारणा', श्लेष्माणमुपादाय भवन्तीत्यर्थः । चतस्रोऽश्मर्यो भवन्तीत्यस्य विवरण कुर्वन्नाह,—तद्यथेत्यादि ॥ ३ ॥

**तत्रासंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य वस्तिमश्मरीं जनयति ॥ ४ ॥**

तासा सम्प्राप्तिं दर्शयन्नाह,—तत्रेत्यादि। मूत्रसंपृक्तो मूत्रेण सहित. ॥ ४ ॥

**तासां पूर्वरूपाणि—वस्तिपीडारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना ज्वरः[2] कृच्छ्रावसादो वस्तगन्धित्वं मूत्रस्येति ॥ ५ ॥**
**यथास्ववेदनावर्णं दुष्टं सान्द्रमथाविलम् ॥**
**पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः ॥६॥**

तासा पूर्वरूपमाह,—तासामित्यादि । वस्तिशिरः मूत्राशयोपरितनो भाग । मुष्कोऽण्डम् । शेफः पुंश्चिह्नम् । कृच्छ्रावसादो कष्टयुक्ताऽङ्गग्लानि. । वस्तगन्धित्वं बृहत्तमच्छगलगन्धित्वम् । यथास्वं दोषानतिक्रमेण, वेदना वर्णश्च यस्मिन् मूत्रे तत्तथा । दुष्टं वातादिभि । आविलं कलुषम् । अश्मनः अश्मर्याः ॥ ५ ॥ ६ ॥

**अथ जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणं गोमेदकप्रकाशमत्यावि[3]लं ससिकतं विसृजति; धावनलङ्घनप्लवनपृष्ठयानोष्णाध्वगमनैश्चास्य वेदना भवन्ति ॥ ७ ॥**

अथ सर्वासामपि सामान्यं लक्षणमाह,—अथेत्यादि । जातासु सर्वास्वप्यश्मरीषु । सङ्गो निरोध । मूत्रविकिरणमिति विकिरणं विक्षेप इतश्चेतश्च गमनम् । गोमेदको मणिः पीत. । ससिकतं

---

१ अश्मरीरोगः युनानीवैद्यके 'हिसात' इति नाम्ना आङ्ग्लभाषायां च 'कॅलक्युलस' (Calculus) इति नाम्ना प्रसिद्ध. ॥

२ 'कृच्छ्राज्ज्वरावसादौ' इति हाराणचन्द्र पठति, 'कृच्छ्रान्मूत्रकृच्छ्राद्धेतोर्वस्तिशिर.प्रभृतीना वेदनेति संबन्धः' इति च व्याख्यानयति ।

३ 'अनाविलं' इति हाराणचन्द्रसमतः पाठ' ।

वालुकासहितं, विसृजति विमुञ्चति, 'मूत्रं' इति शेषः । लङ्घनं परिखादीनां, प्लवनं प्रतरणं, उष्णगमनं घर्मगमनं, अध्वगमनं दीर्घमार्गगमनम् ॥ ७ ॥

**तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याधः परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च भवति; अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति, तां श्लैष्मिकीमिति विद्यात् ॥ ८ ॥**

इदानीं श्लेष्माद्यश्मरीणां प्रत्येकं विशिष्टलक्षणमाह,—तत्रेत्यादि । श्लेष्मलमन्नमभ्यवहरतः पुंसः श्लेष्माश्मरी (शरीरे) स्रोतो निरुणद्धीति संबन्धः । उपलिप्य नवघटपङ्कन्यायेन । अधिष्ठाय आश्रित्य । दाल्यते विशीर्यत इव स्फुटतीवेत्यर्थः । भिद्यते विदीर्यत इव । निस्तुद्यते सूचिभिरिव ॥ ८ ॥

**पित्तयुक्तस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघातादूष्यते चूष्यते दह्यते पच्यत इव वस्तिरुष्णवातश्च भवति; अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति, तां पैत्तिकीमिति विद्यात् ॥ ९ ॥**

पित्तयुक्तस्त्वित्यादि । पित्तयुतः श्लेष्मा स्रोतो निरुणद्धीति संबन्धः । संघातमुपगम्य काठिन्यं प्राप्येत्यर्थः । तस्य पुरुषस्य । मूत्रप्रतीघातात् मूत्रनिरोधात् । ऊष्यते समीपाग्निनेवोपतप्यते, चूष्यते आकृष्यत इव, दह्यते इव कक्षाग्निनेव, पच्यत इव क्षारेणेव, उत्क्वाथ्यत इवेत्येके । उष्णवात उत्तरतन्त्रे पठितो मूत्ररोगः । सरक्ता ईषद्रक्ता ॥ ९ ॥

**वातयुतस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघातात्तीव्रा वेदना भवति, तथाऽत्यर्थं पीड्यमानो दन्तान् खादति नाभिं पीडयति मेढ्रं मृद्नाति पायुं स्पृशति विशर्धते विदहति वातमूत्रपुरीषाणि कृच्छ्रेण चाऽस्य मेहतो निःसरन्ति; अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति, तां वातिकीमिति विद्यात् ॥ १० ॥**

वातयुतस्त्वित्यादि । अत्रापि पूर्ववत् संबन्धः । दन्तान् खादति परस्परं दन्तपीडनं करोति । विशर्धते गुदेन कुत्सितं शब्दं करोति, केचित् 'विशर्धते' इत्यत्र 'विवर्धते' इति पठन्ति व्याख्यानयन्ति च—मेढ्रं विमर्दनात् विवर्धत इत्यर्थः । विदहति विदाहयुक्तं मेढ्रं भवति । मेहतो मुञ्चत इत्यर्थः । खरा कठिना ॥ १० ॥

**प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति; तेषामेवाल्पवस्तिकायत्वादनुपचितमांसत्वाच्च वस्तेः सुखग्रहणाहरणा भवन्ति, महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति ॥ ११ ॥**

प्रायेणेत्यादि । प्रायेणैतास्तिस्रोऽश्मर्यो बालानां भवन्तीति संबन्धः । कस्मादित्याह—विशेषेण दिवास्वप्नादिप्रियत्वात्तेषामिति; प्रायोग्रहणाद्यूनामपि बोधयति । तेषामेव बालानाम् । अल्पवस्तिकायत्वादिति अल्पवस्तित्वादल्पकायत्वाच्चेत्यर्थः । अल्पवस्तित्वादिति आयामेनाल्पत्वं; अनुपचितवस्तिमांसत्वाच्च वस्तेरित्यनेन परिणाहेनाल्पत्वमुक्तम् । सुखग्रहणाहरणा इति सुखेन गृह्यन्ते सुखेनाह्रियन्ते चाश्मर्यः ॥ ११ ॥

**मैथुनाभिघातादतिमैथुनाद्वा शुक्रं चलितमनिर्गच्छद्विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति, संहृत्य चोपशोषयति; सा मूत्रमार्गमावृणोति, मूत्रकृच्छ्रं वस्तिवेदनां वृषणयोश्च श्वयथुमापादयति, पीडितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते; तां शुक्राश्मरीमिति विद्यात् ॥ १२ ॥**

हेतुसंप्राप्तिलक्षणानि शुक्राश्मर्या दर्शयन्नाह,—मैथुनेत्यादि । सा अश्मरी । मैथुनविघातादतिमैथुनाद्वेति हेतुः । शुक्रं चलितमनिर्गच्छदित्यादिसंप्राप्तिः । मूत्रकृच्छ्रं वस्तिवेदनामित्यादि लक्षणम् । मैथुनविघातात् मैथुनकार्यस्य शुक्रस्य विघातात् । अतिमैथुनादिति केचित् पठन्ति, तत्र शुक्रबाहुल्यं शुक्रचलने हेतुः । अनिर्गच्छत् अनिःसरत् । अनिर्गच्छन्निति केचित् पठन्ति; तत्र वायोर्विशेषणम् । विमार्गगमनादनिलोऽभितः संगृह्येति विमार्गगमनादुन्मार्गगमनात्, अनिलो वायुः, अभितः उभयतः ऊर्ध्वमधश्चेत्यर्थः, संगृह्य विधार्य, मेढ्रवृषणयोरन्तरे वस्तिद्वारस्याध इत्यर्थः, संहरति वर्तुलीकरोति । वृषणयोश्चेति चकाराद्वङ्क्षणदेशेऽपि, दोषजासु त्वश्मरीषु वृषणशोफो नास्त्येव । प्रविलयमापद्यते अश्मरी विलीयतेऽल्पत्वात्, अन्ये तु पुनरश्मरीकृतो वृषणशोथः प्रविलयमापद्यत इत्याचक्षते ॥ १२ ॥

**भवन्ति चात्र ।**

**शर्करा सिकता मेहो भस्माख्योऽश्मरिवैकृतम् ॥**

१ 'तत्रात्यर्थं श्लेष्मल' इति पा० ।
२ 'अभ्यवहरतः श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं' हा० पा० ।
३ कफाश्मरी—स्टोन ऑफ् फोस्फेट्स—(Stone of Phosphates) ।
४ पित्ताश्मरी—मिक्स्ड कॅल्क्युलस् (Mixed Calculus) ।
५ वाताश्मरी—युरिक एसिड कॅल्क्युलस (Uric acid Calculus) ।

१ 'मैथुनविघातात्' इति पा० ।
२ 'चलितमनिर्गलत्' इति पा० ।
३ शुक्राश्मरी—सेमिनल कॅल्क्युलस (Seminal Calculus) ।

भवन्ति चात्रेत्यादि । भस्माख्य इति मूत्रशुक्रनामा उत्तरतन्त्रे मूत्ररोगः । अश्मरीवैकृतमश्मरीविकारा उपद्रवा इत्यर्थः ॥—

**अश्मर्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना ॥ १३ ॥**
**पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः ॥**

अश्मर्या इत्यादि । अश्मर्यास्तुल्यव्यञ्जनवेदना शर्करा ज्ञेयेत्यर्थः । पवन इत्यादि । सा अश्मरी यदाऽल्पा स्यात्तदा वातेऽनुगुणेऽनुकूले सति निरेति निर्गच्छति ॥ १३ ॥—

**सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते ॥ १४ ॥**
**हृत्पीडा सक्थिसदनं कुक्षिशूलः सवेपथुः ॥**
**तृष्णोर्ध्वगोऽनिलः कार्ष्ण्यं दौर्बल्यं पाण्डुगात्रता १५**
**अरोचकाविपाकौ तु शर्करार्ते भवन्ति च ॥**

शर्करालक्षणमाह,—सेत्यादि । सक्थिसदनमूरुग्लानिः ॥ १४ ॥ १५ ॥—

**मूत्रमार्गप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥ १६ ॥**
**दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम् ॥**
**पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम् ॥१७॥**

अश्मर्या एव मूत्रमार्गगताया लक्षणं निर्दिशन्नाह,—मूत्रमार्गेत्यादि । सा अश्मरी, सक्ता अनिर्गता, दौर्बल्यं बलहानिः; सदनमङ्गग्लानि, स्फुटनिकेत्यपरे, कार्श्यं मांसक्षयः ॥ १६ ॥ ॥ १७ ॥

**नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम् ॥**
**एकद्वारस्तनुत्वक्को मध्ये बस्तिरधोमुखः ॥ १८ ॥**
**अलाब्वा इव रूपेण सिरास्नायुपरिग्रहः ॥**
**बस्तिर्बस्तिशिरश्चैव पौरुषं वृषणौ गुदम् ॥ १९ ॥**
**एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः[१] ॥**
**मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ॥ २० ॥**
**पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः ॥**
**तर्पयन्ति सदा मूत्रं सरितः सागरं यथा ॥ २१ ॥**
**सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः ॥**
**नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात् ॥ २२ ॥**
**जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्यते ॥**
**आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः ॥२३॥**
**घटो यथा तथा[२] विद्धि बस्तिर्मूत्रेण पूर्यते ॥**

इदानीमश्मर्या एवाधारस्य बस्तेः स्थानसंस्थानद्वाराणि निर्देष्टुमाह,—नाभीत्यादि । नाभ्यादीनां मध्ये बस्तिरिति स्थानम् । एकद्वार अधोमुख इत्यनेनोपरि द्वाराभावं सूचयति । तनुत्वक्कः सूक्ष्मत्वक् । तनुत्वक्क इति वक्ष्यमाणं चालाब्वा इव रूपेणेति च संस्थानम् । बस्तिप्रसङ्गेन बस्तिसन्निहितानां चापरेषां स्थानमाह,—बस्तिरित्यादि । पौरुषं मेढ्रम् । पुनर्बस्त्यवयवमाह,—अलाब्वा इवेत्यादि । परिग्रह आश्रयः । मूत्राशयपर्यायो मलाधार इति । प्राणानामग्नीषोमादीनाम्, आयतनं स्थानम् । यथा च सर्वदाऽसावक्षीणमूत्रो भवति तथाऽऽह—पक्वाशयगता इत्यादि । ता नाड्यो मूत्रं तर्पयन्ति वर्धयन्तीत्यर्थः । मूत्रवाहिन्यौ मूलधमन्यौ द्वे तच्छाखाभूता दशधा शतधा सहस्रधा भिद्यन्त इति दर्शयन्नाह,—सूक्ष्मेत्यादि । आसां नाडीनाम् । याभिरेवायं सिरास्नायुभिरावृतस्ताभिरेवायं मूत्रेण पूर्यतेऽधोमुखत्वेनेति दर्शयन्नाह—नाडीभिरित्यादि । आमाशयान्तरादामपक्वाशयान्तरात् । स बस्तिः । निःस्यन्देन उपस्नेहेन पूर्यते । अधोमुखत्वेन बस्तेरनूर्ध्वमुखस्यापि पूरणमुपमानेनाह,—आमुखादित्यादि । न्यस्तो धृतः । विद्धि जानीहि ॥ १८—२३ ॥—

**एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा ॥ २४ ॥**
**मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम् ॥**

मूत्रप्रवेशतुल्यमेव वातादीनामपि प्रवेशं दर्शयन्नाह,—एवमेवेत्यादि । एवमेव प्रवेशेनेति पूर्वोक्तप्रवेशेनेत्यर्थः । उपस्नेहात् समीपक्लेदनात् ॥ २४ ॥—

**अप्सु स्वच्छा(स्था)स्वपि यथा निषिक्तासु नवे घटे२५**
**कालान्तरेण पङ्कः स्यादश्मरीसंभवस्तथा ॥**
**संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः ॥२६॥**
**तद्वद्बलासं बस्तिस्थमूष्मा संहन्ति[१] सानिलः ॥**

ननु, द्रवरूपत्वात् सर्वेषां वायोश्चामूर्तत्वात्कथं घनता तदाह—अप्स्वित्यादि । निषिक्तासु प्रक्षिप्तासु । पङ्कसमत्वेऽपि कथमश्मना साम्यमित्याह,—संहन्तीत्यादि । यथा संहन्ति काठिन्यं करोति वर्षोपलान् करोतीत्यर्थः, कः काठिन्यं करोति ? वायुः वैद्युतोऽग्निश्च; काः ? आपः जलानि, दिव्या मेघजाः, तथा बलासं श्लेष्माणं बस्तिस्थं संहन्ति कठिनं करोति, कः ? ऊष्मा पित्तमित्यर्थः; कथम्भूतः ? सानिलः सवात इत्यर्थः ॥ २५ ॥ ॥ २६ ॥—

**मारुते प्रगुणे बस्तौ मूत्रं सम्यक् प्रवर्तते ॥**
**विकारा विविधाश्चापि प्रतिलोमे[२] भवन्ति हि ॥२७॥**
**मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च ॥**
**मूत्रदोषाश्च ये केचिद्बस्तावेव भवन्ति हि ॥ २८ ॥**

**इति सुश्रुतसंहितायां निदानस्थानेऽश्मरीनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥**

बस्तिगतानामन्येषामपि विकाराणां वायुरेव हेतुरिति दर्शयन्नाह,—मारुत इत्यादि । प्रगुणे अनुकूले, 'अनुगुणे' इति केचित् पठन्ति, तत्रापि स एवार्थः । प्रतिलोमे विगुणे । वाते

१ 'विवराश्रिताः' इति पा० ।
२ 'तु ता' इति पाठान्तरम् ।

१ 'कठिनाः' इति पा० ।
२ 'विकूले' इति पा० ।

विगुणे सति वस्तौ ये विकारास्तानेवाह,—मूत्राघाता इत्यादि ॥ २७ ॥ २८ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

**अथातो भगन्दराणां निदानं व्याख्यास्यामः ॥१॥ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथेत्यादि ॥ १ ॥ २ ॥

**वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्तोन्मार्गिणो यथासंख्यं पञ्च भगन्दरा भवन्ति। ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा[1] इत्युच्यन्ते। अपक्काः पिडकाः, पक्कास्तु भगन्दराः ॥ ३ ॥**

वातपित्तेत्यादि । सख्येयनिर्देशादेव संख्यासिद्धौ पञ्चेतिवचनं शोणितजादिनिषेधार्थम् । भगन्दरनिरुक्तिमाह—ते त्वित्यादि ॥ ३ ॥

**तेषां तु पूर्वरूपाणि—कटीकपालवेदना कण्डूर्दाहः शोफश्च गुदस्य भवति ॥ ४ ॥**

पूर्वरूपमाह,—तेषां त्वित्यादि । तेषां तु पूर्वरूपाणि भवन्तीत्यर्थः । कटीकपालः कटीफलकः ॥ ४ ॥

**तत्रापथ्यसेविनां वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिडकां जनयति, साऽस्य तोदादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, मूत्राशयाभ्यासगतत्वाच्च व्रणः प्रक्लिन्नः शतपोनकवदणुमुखैश्छिद्रैरापूर्यते, तानि च छिद्राण्यजस्रमच्छं फेनानुविद्धमधिकमास्रावं स्रवन्ति, व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते, गुदं चावदीर्यते, उपेक्षिते च वातमूत्रपुरीषरेतसामप्यागमश्च तैरेव छिद्रैर्भवति; तं भगन्दरं शतपोनकमित्याचक्षते ॥ ५ ॥**

पूर्वरूपानन्तर पिडिकोत्पत्तिपाकोपद्रवनिरुक्तीर्दर्शयन्नाह,—तत्रापथ्येत्यादि । सन्निवृत्तो व्याघुटित । गुदमभितो गुदस्य सर्वत , अन्ये गुदसन्निधावित्याहु । अभ्यासः समीपम् । शतपोनक शूकदोषपरिपठितो व्याधि ; चालनिकेति जेज्जटाचार्य , तन्नेच्छति गयदासाचार्य , लोकशास्त्रयोश्चालनिकाया शतपोनकशब्दस्याप्रसिद्धत्वात् ; अश्वपुच्छवालरचितं शैताक्षकमित्यन्ये । तुद्यते व्यथ्यते । ताड्यते दण्डेनेवाभिहन्यत इत्यर्थः । भिद्यते लगिरदार्यत इव । छिद्यते द्विधा क्रियत इव ॥ ५ ॥

**पित्तं तु प्रकुपितमनिलेनाधः प्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति; साऽस्य चोषादीन् वेदनाविशेषाञ्जनयति; अप्रतिक्रियमाणा च पाकमुपैति; व्रणश्चाग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ॥ ६ ॥**

पित्त त्वित्यादि । पूर्ववदवस्थितमिति गुदमभितोऽङ्गुले द्व्यङ्गुले वेत्यर्थः । विसृजति व्रण इति सबन्ध ॥ ६ ॥

**श्लेष्मा तु प्रकुपितः समीरणेनाधः प्रेरितः पूर्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिडकां जनयति, साऽस्य कण्ड्वादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरं परिस्राविणमित्याचक्षते ॥ ७ ॥**

श्लेष्मेत्यादि । संरम्भी शोफवान्, कण्डूप्राय खर्जूबहुल , परिस्रावीत्येवंशीलः ॥ ७ ॥

**वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याधो गत्वा पूर्ववदवस्थितः पादाङ्गुष्ठप्रमाणां सर्वलिङ्गां पिडकां जनयति, साऽस्य तोददाहकण्ड्वादीन् वेदनाविशेषान् जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च नानाविधवर्णमास्रावं स्रवति, पूर्णनदीशम्बूकावर्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः; तं भगन्दरं शम्बूकावर्तमित्याचक्षते ॥ ८ ॥**

वेदनाविशेषा इति पूर्णनदीशम्बूकावर्तवन्नैरन्तर्येण वेदना उत्तिष्ठन्तीत्येके; अन्ये तु तथाविधगत्यारम्भकस्य शोफस्य पूर्णनद्यावर्तशम्बूकावर्ताकारेणावगत्वादवगाढवेदना भवन्तीत्यर्थः। शम्बूकाख्या शङ्खा ॥ ८ ॥

**मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदाऽवगाढपुरीषोन्मिश्रमपानेनाधःप्रेरितमसम्यगागतं गुदं क्षिणोति तत्र(तः)क्षतनिमित्तः कोथ उपजायते, तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलप्रक्लिन्नायां क्रिमयः संजायन्ते, ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति, तस्य तैर्मार्गैः क्रिमिकृतैर्वातमूत्रपुरीषरेतांस्यभिनिःसरन्ति; तं भगन्दरमुन्मार्गिणमित्याचक्षते ॥ ९ ॥**

मूढेनेत्यादि । कोथ पूतिभाव । पार्श्वतो दारयन्ति पक्षतो दारयन्ति । अस्याग्रे, अर्शोभगन्दर केचित् पठन्ति, तन्न; सर्वैर्निबन्धकारैर्निराकृतत्वात् ॥ ९ ॥

---

१ भगन्दर युनानीवैद्यके 'नवासीर' इति नाम्ना, आङ्गलभाषाया च 'फिस्चुला इन् एनो' (Fistula in Ano) इति नाम्ना प्रसिद्ध ॥

भवन्ति चात्र।

उत्पद्यतेऽल्परुक् शोफात् क्षिप्रं चाप्युपशाम्यति॥
पाय्वन्तदेशे पिडका सा ज्ञेयाऽन्या भगन्दरात् १०
पायोः स्याद्व्यङ्गुले देशे गूढमूला सरुग्ज्वरा॥
भागन्दरीति विज्ञेया पिडकाऽतो विपर्ययात्॥११॥

अभागन्दरीं भागन्दरीं च पिडकामाह,—भवन्ति चात्रेत्यादि। पाय्वन्तदेशे पिडका शोफादुत्पद्यत इति संबन्धः। अल्परुगल्पवेदना, पाय्वन्तदेशे गुदस्यान्ते, अन्या भगन्दरादपरा भगन्दरेभ्य इत्यर्थः। एतेनाभागन्दरी पिडकोक्ता, यतोऽस्या भगन्दरो नोत्पद्यते। या तु भगन्दरेणोत्पद्यते तामाह—पायोरित्यादि। अतोऽभागन्दर्या पिडकाया', विपर्ययात् विपरीतत्वात्, भगन्दरकरी भवतीत्यर्थः॥ १०॥ ११॥

यानयानान्मलोत्सर्गात् कण्डूरुग्दाहशोफवान्॥
पायुर्भवेद्रुजः कट्यां पूर्वरूपं भगन्दरे॥ १२॥

यानेत्यादि। यानयानात् रथादिगमनात्, मलोत्सर्गात् पुरीषत्यागात्। कण्डूरुग्दाहशोफवान् पायुर्भवेत्, ततोऽनन्तरं कट्या कण्डूरुग्दाहशोफादिकं पूर्वरूपं भवेत्। अयं चापठनीय पूर्वो वा, पूर्वरूपग्रन्थद्वय वा पठनीयं, पूर्वश्चाप्रसिद्ध, अयं तु प्रसिद्ध॥ १२॥

घोराः साधयितुं दुःखाः सर्वे एव भगन्दराः॥
तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च भगन्दरः॥ १३॥

इति सुश्रुतसंहितायां निदानस्थाने भगन्दरनिदानं नाम चतुर्थोऽध्यायः॥ ४॥

तत्र केषाञ्चिदसाध्यत्वं दर्शयन्नाह,—घोरा इत्यादि। घोरा दुःखप्रदाः, साधयितुं दुःखाः कष्टसाध्या, 'भवन्ति' इत्यध्याहार॥ १३॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्याया निदानस्थाने चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

अथातः कुष्ठनिदानं व्याख्यास्यामः॥ १॥
यथोवाच भगवान् धन्वन्तरिः॥ २॥

अथेत्यादि॥ १॥ २॥

मिथ्याहाराचारस्य विशेषाद्गुरुविरुद्धासात्म्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्मसेविनो ग्राम्यानूपौदकमांसानि वा पयसाऽभीक्ष्णमश्नतो यो वा मज्जत्यप्सूष्माभितप्तः सहसा छर्दिं वा प्रतिहन्ति, तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्यग्गाः सिराः संप्रतिपद्य समुद्धूय बाह्यं मार्गं प्रति समन्ताद्विक्षिपति, यत्र यत्र च दोषो विक्षिप्तो निःस(श्च)रति तत्र तत्र मण्डलानि प्रादुर्भवन्ति, एवं समुत्पन्नस्त्वचि दोषस्तत्र तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तरं प्रतिपद्य धातूनभिदूषयति॥ ३॥

इदानीं हेतुमाह—मिथ्येत्यादि। मिथ्याहाराचारस्य शास्त्रोक्तविधिभ्रष्टाहाराचारस्येत्यर्थं। संप्राप्तिमाह,—तस्येत्यादि। तस्य मिथ्याहाराचारस्येत्यादिकस्य। समुद्धूय आक्षिप्य, समन्तात् सर्वत्र। एतेन सर्वदेहगतत्वं रोगस्य सूचयति॥ ३॥

तस्य पूर्वरूपाणि—त्वक्पारुष्यमकस्माद्रोमहर्षः कण्डूः स्वेदबाहुल्यमस्वेदनं वाऽङ्गप्रदेशानां स्वापः क्षतविसर्पणमसृजः कृष्णता चेति॥ ४॥

पूर्वरूपमाह—तस्येत्यादि। अकस्मात् कारणं विना, स्वापः स्पर्शाज्ञानम्॥ ४॥

तत्र सप्त महाकुष्ठानि, एकादश क्षुद्रकुष्ठानि; एवमष्टादश कुष्ठानि भवन्ति। तत्र महाकुष्ठान्यरुणौदुम्बरर्ष्यजिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति। क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं चर्मदलं विसर्पः परिसर्पः सिध्मं विचर्चिका किटिभं(मं) पामा रकसा चेति। सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्ति; उत्सन्नतस्तु दोषग्रहणमभिभवात्॥ ५॥

इदानी सङ्ख्यामाह,—तत्रेत्यादि। महत्त्वमुत्तरोत्तरधात्वनुप्रवेशात्। एकादशकुष्ठाना क्षुद्रत्वमुत्तरोत्तरधात्वननुप्रवेशात्। अष्टादश कुष्ठानि भवन्तीति दिङ्मात्रमिदं दर्शित, कुष्ठानामनियतसङ्ख्यत्वात्, तथा च चरक—"सप्तविधा अष्टादशविधा असङ्ख्येयविधा वा" इति। महाकुष्ठानि नामत' प्राह,—तत्र महाकुष्ठानीत्यादि। क्षुद्रकुष्ठानि नामत' प्राह,—क्षुद्रकुष्ठान्यपीत्यादि। सर्वेष्वेव कुष्ठेषु सर्वेषामेव दोषाणा क्रिमीणां च सम्भवं दर्शयन्नाह,—सर्वाणीत्यादि। सर्वाणि क्षुद्राणि महान्ति च। कथं तर्हि वातेनारुणमित्यादीत्याशङ्क्याह,—उत्सन्नतस्तु दोषग्रहणमभिभवादिति, उत्सन्नत औत्कट्यतो दोषग्रहणम्, अभिभवात् 'इतरदोषयो' इति शेष॥ ५॥

तत्र वातेनारुणं, पित्तेनौदुम्बरर्ष्यजिह्वकपालकाकणकानि, श्लेष्मणा पुण्डरीकं दद्रुकुष्ठं चेति। तेषां तु महत्त्वं क्रियागुरुत्वमुत्तरोत्तरं धात्वनुप्रवेशादसाध्यत्वं चेति॥ ६॥

यस्य दोषस्य यस्मिन् कुष्ठे प्राधान्यं तद्दर्शयन्नाह,—तत्रेत्यादि। तत्रारुणादीना सप्ताना महत्त्वादिषु हेतुं दर्शयन्नाह,—तेषामित्यादि। अनुशब्देन पश्चादर्थवाचिना महत्त्वेऽप्यसा-

१ 'ऽल्परुक्शोथा' इति पा०।

१ 'प्रतिपद्यते धातूनभिदूषयन्' इति पा०।
२ महाकुष्ठानि आङ्गलभाषाया 'लेप्रसी' (Leprosy) इति नाम्ना प्रसिद्धानि।
३ 'औत्कट्य तेन' इति पा०।

ध्यत्वं काकणकवर्जं कालान्तरं च सूच्यते; काकणकं पुनरुत्पत्तावेवासाध्यं, व्याधिस्वभावात् । असाध्यत्वं चेति चकारो धात्वनुप्रवेशाचेत्यनन्तरं द्रष्टव्यः । तेनानुक्तमारम्भकदोषमहत्त्वं समुच्चिनोति ॥ ६ ॥

**तत्र, वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि; पित्तेन पक्वोदुम्बरफलाकृतिवर्णान्यौडुम्बराणि, ऋष्यजिह्वाप्रकाशानि खराणि ऋष्यजिह्वानि, कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि, काकणन्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकानि, तेषां चतुर्णामप्योपचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि, पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि श्लेष्मणा, अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिडकावन्ति च दद्रुकुष्ठानि; तयोर्द्वयोरप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वं चेति सामान्यानि रूपाणि ॥ ७ ॥**

तत्र महाकुष्ठाना लक्षणं दर्शयन्नाह,—तत्र वातेनेत्यादि । ऋष्यजिह्वाप्रकाशानीति ऋष्यजिह्वाया इव प्रकाश सादृश्यं येषां तानि खरत्वयुक्तानि, ऋष्यो नीलाण्ड: 'रोरु' इति प्रसिद्ध, अन्ये 'ऋक्ष' इति पठन्ति, ऋक्षो 'रीछ' इति लोके । कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि कृष्णकपालिका कर्करा । काकणन्तिकाफलसदृशान्यतीव कृष्णरक्तानि काकणन्तिकानि, काकणन्तिका गुञ्जा, 'चिरिहण्टिका' इति प्रसिद्धा, तत्फलवद्रक्तानि मध्ये कृष्णानि । उडुम्बरादीना पित्तकृतत्वं दर्शयन्नाह,—तेषामित्यादि । ओषोऽनलसमीप इवोपताप, दुष्टस्येव वेदनाविशेष इत्यन्ये । चोष आचूष्यत इव वेदनाविशेष, पिपासेत्यन्ये । परिदाह सर्वतो दाह । धूमायनं धूमोपहतस्येव, धूमोद्गमनमिवाङ्गानामित्येके । पुण्डरीकदद्रुकुष्ठयोर्लक्षणं दर्शयन्नाह,—श्लेष्मणेत्यादि । पुण्डरीक श्वेतपद्मम् । दद्रुकुष्ठं[१] द्विविध सितमसितं च, असितस्य महोपक्रमसाध्यत्वादनुबन्धित्वप्रकर्षाच्च महाकुष्ठेपु मध्ये सुश्रुते पाठ, सितदद्रुकुष्ठस्य सुखसाध्यत्वादुत्तरोत्तरधात्वनुप्रवेशाभावात्तथाऽत्यर्थपीडारहितत्वाच्च चरके क्षुद्रकुष्ठेपु मध्ये पाठ इत्यदोप. । दद्रुसिध्मयो सुश्रुतचरकादिष्वेतयोरभिधानमेद इति जेज्झटाचार्य समादधति, तन्नेच्छति गयदासाचार्य । तयो पुण्डरीकदद्रुकुष्ठयो' पित्तकफकृतत्वं दर्शयन्नाह,—तयोरित्यादि । परिमण्डलता परिपूर्णमण्डलता ॥ ७ ॥

**क्षुद्रकुष्ठान्यत ऊर्ध्वं वक्ष्यामः—**
**स्थूलानि सन्धिष्वतिदारुणानि**
**स्थूलारुषि[२] स्युः कठिनान्यरूंषि ॥**

१ दद्रुकुष्ठमाङ्गलभाषायां 'रिंगवर्म' (Ringworm) इति नाम्ना युनानीवैद्यके च 'कुना' इति नाम्ना प्रसिद्धम् ।
२ 'स्थूलारुषि स्थूलारुष्कसंज्ञे कुष्ठे' हाराणचन्द्र. ।

क्षुद्रकुष्ठेपु प्राक् स्थूलारुष्कमाह,—स्थूलानीत्यादि । स्थूलानि स्थूलमूलानि, दारुणानि कृच्छ्रसाध्यानि, अरूंषि व्रणाः ॥—

**त्वक्कोचभेदस्वपनाङ्गसादाः**
**कुष्ठे महत्पूर्वयुते[१] भवन्ति ॥ ८ ॥**

महाकुष्ठलक्षणमाह,—त्वक्कोचेत्यादि । त्वक्शब्दः कोचभेदस्वापशब्दै' सह प्रत्येकं सवध्यते; तेन त्वक्कोच. त्वक्सङ्कोचः, त्वग्भेदः त्वग्विदारणं, त्वक्स्वपनं त्वचोऽचेतनत्वम्, अङ्गसादोऽङ्गग्लानिः । कुष्ठे महत्पूर्वयुत इति महाकुष्ठ इत्यर्थ. ॥ ८ ॥

**कृष्णारुणं येन भवेच्छरीरं**
**तदेककुष्ठं प्रवदन्ति[२] कुष्ठम् ॥**

एककुष्ठमाह,—कृष्णारुणमित्यादि ॥—

**स्युर्येन कण्डूव्यथनौषचोषा-[३]**
**स्तलेषु तच्चर्मदलं[४] वदन्ति ॥ ९ ॥**

चर्मदलमाह,—स्युर्येनेत्यादि । चोष आचूषणमिव । तलेषु हस्तपादतलेपु ॥ ९ ॥

**विसर्पवत् सर्पति सर्वतो य-**
**स्त्वग्रक्तमांसान्यभिभूय शीघ्रम् ॥**
**मूर्च्छाविदाहारतितोदपाकान्**
**कृत्वा विसर्पः स भवेद्विकारः ॥ १० ॥**

विसर्पकुष्ठलक्षणमाह,—विसर्पवदित्यादि । अत्रोक्तविसर्पाख्यकुष्ठस्य वक्ष्यमाणविसर्परोगस्य च चिरविसर्पणशीघ्रविसर्पणतो भेद ॥ १० ॥

**शनैः शरीरे पिडकाः स्रवन्त्यः**
**सर्पन्ति यास्तं परिसर्पमाहुः ॥**

परिसर्पमाह,—शनैरित्यादि ॥—

**कण्डूान्वितं श्वेतमपायि[६] सिध्मं[५]**
**विद्यात्तनु प्रायश ऊर्ध्वकाये ॥ ११ ॥**

सिध्मकुष्ठमाह—कण्डून्वितमित्यादि । अपायि अकष्टकारि । प्रायश ऊर्ध्वकाय इति प्राय शब्दोपादानादध कायेऽपि कदाचिद्भवति । सिध्मकुष्ठं द्विविधं—सिध्मं पुष्पिकासिध्म च, पुष्पिकासिध्मस्य सुखसाध्यत्वात् सुश्रुते क्षुद्रकुष्ठेपु पाठः, सिध्मस्य दु खसाध्यत्वाच्चरके महाकुष्ठे पाठ इत्यदोषः ॥ ११ ॥

**राज्योऽतिकण्डूर्तिरुजः सरूक्षा**
**भवन्ति गात्रेपु विचर्चिकायाम्[७] ॥**

१ 'कोचभेदस्त्वमी' इति पा० ।
२ 'प्रवदन्त्यसाध्यम्' इति पा० ।
३ 'कण्डूव्यथशोषचोषा' इति पा० ।
४ चर्मदल—झेरोडर्मा (Zeroderma).
५ सिध्म—क्लोआज्मा (Cloasma)
६ 'अपायि शीततां विनाशीत्यर्थ' इति हाराणचन्द्रः ।
७ विचर्चिकाकुष्ठमाङ्गलभाषायां 'पेंफिगस् (Pemphigus) इति नाम्ना प्रसिद्धम् ।

**कण्डूमती दाहरुजोपपन्ना**
**विपादिका पादगतेयमेव ॥ १२ ॥**

विचर्चिकामाह,—राज्य इत्यादि । राज्यो रेखाः, ताश्च सरूक्षा भवन्ति, कण्डूर्तिः खर्जूपीडा, रुजो वेदनाः, अतिशब्दः कण्डूर्तिरुग्भ्यां संवध्यते । गात्रेषु पाणिपादेषु । कण्डूमतीत्यादि । इयमेव विचर्चिका पादगता यदा स्यात्तदा विचर्चिकासंज्ञां विहाय विपादिकासंज्ञां प्राप्नोतीत्यर्थः ॥ १२ ॥

**यत् स्रावि वृत्तं घनमुग्रकण्डु**
**तत् स्निग्धकृष्णं किटिभं(मं)वदन्ति ॥**

किटिभमाह—यदित्यादि । रक्तकृष्णमिति केचित् पठन्ति ॥—

**सास्रावकण्डूपरिदाहकाभिः**
**पामाऽणुकाभिः पिडकाभिरूह्या ॥ १३ ॥**
**स्फोटैः सदाहैरति सैवं कच्छूः**
**स्फिक्पाणिपादप्रभवैर्निरूप्या ॥**

अथ पामामाह,—सास्रावेत्यादि । सहास्रावकण्डूपरिदाहकैर्वर्तन्ते या पिडकास्तास्तथाविधाः, ताभिरूह्या पामेति संवन्धः; ये तु 'सास्रावकण्डूपरिदाहवद्भिः' इति पठन्ति ते तु व्याख्यानयन्ति—सास्रावौ यौ कण्डूपरिदाहौ तद्युक्तं पुरुषं कृत्वा, अणुकाभि पिडकाभिः कृत्वा, पामा ऊह्या 'वैद्यै' इति शेष.। सैव कच्छूरिति सैव पाण्यो. स्फिजोश्च तीव्रदाहै. स्फोटैरुपगता कच्छूरुच्यते ॥ १३ ॥—

**कण्ड्वन्विता या पिडका शरीरे**
**संस्रावहीना रकसोच्यते सा ॥ १४ ॥**

रकसामाह,—कण्ड्वन्वितेत्यादि । शरीरे सकले काये ॥१४॥

**अरुः ससिध्मं रकसा महच्च**
**यच्चैककुष्ठं कफजान्यमूनि ॥**
**वायोः प्रकोपात्परिसर्पमेकं**
**शेषाणि पित्तप्रभवाणि विद्यात् ॥ १५ ॥**

इदानीं कस्मिन् क्षुद्रकुष्ठे कस्याधिक्यमित्याह,—अरुरित्यादि । अरुः स्थूलारुष्कम् । शेषाणि विसर्पकिटिभविचर्चिकापामाचर्मदलानि । अरु ससिध्ममित्यादि जेज्झटेन स्वकपोलकल्पितः श्लोक इति गयदासाचार्यो न मन्यते, यस्मादेककुष्ठं महाकुष्ठं च वातादेव भवति न कफात्, परिसर्पं पित्तात्, पाठान्तरं चात्रारुष्कमित्यादि पठति, तच्चाभावान्न लिखितम् ॥ १५ ॥

**किलासमपि कुष्ठविकल्प एव; तत्रिविधं वातेन पित्तेन श्लेष्मणा चेति । कुष्ठकिलासयोरन्तरं—त्वग्गतमेव किलासमपरिस्रावि च । तद्वातेन मण्डलमरुणं परुषं परिध्वंसि च, पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहं च, श्लेष्मणा श्वेतं स्निग्धं बहलं कण्डूमच्च । तेषु सम्बद्धमण्डलमन्तेजातं रक्तरोम चासाध्यमग्निदग्धं च ॥ १६ ॥**

किलास निर्दिशन्नाह,—किलासमपीत्यादि । अपिशब्द संभावनायां, तेन किलासं कुष्ठविकृतिरिति सभाव्यते; अन्ये तु, किमपि किलासं कुष्ठविकल्पो न भवतीत्यपिशब्दादाहुः, किं तत् किलास कुष्ठविकल्पो न भवति ? उच्यते,—त्वग्गतमपरिस्रावि चेति, अन्तरं भेद । त्वग्गतमिति कुष्ठ त्वग्रक्तमांसमधिष्ठाय त्वचि दर्शयत्यात्मानं, किलास तु त्वचमेव, केवला त्वचमधितिष्ठतीत्यर्थः । अन्ये तु त्वग्गतमेव किलाससञ्ज्ञं, तदेव धात्वनुप्रवेशाच्छ्वित्रसंज्ञमित्याहु । तथा च विश्वामित्र.,—"त्वग्गतं तु यदस्रावि किलासं तत् प्रकीर्तितम् । यदा त्वचमतिक्रम्य तद्धातूनवगाहते । हित्वा किलाससंज्ञा च श्वित्रसंज्ञां लभेत तत्" —इति । वातादिजाना किलासानां लक्षणमाह,—तद्वातेनेत्यादि । परिध्वंसीति घृष्टं सद्रजो मुञ्चतीत्यर्थ । बहलं स्थूलम् । अतः परमसाध्यावधारणं—तेष्वित्यादि । तेषु वातपित्तश्लेष्मजेषु किलासेषु । संवद्धमण्डलमिति परस्परमभिन्नमण्डलमित्यर्थः । अन्ते जातमोष्ठपाणिपादगुह्यजं, अन्ये त्वत्रान्तर्जातरक्तरोमेति पठन्ति, अन्तर्मध्ये जातानि रक्तानि लोमानि यत्र तत्तथा; तेष्वसाध्यमग्निदग्धं चेति चकारेण पाणिपादगुह्यौष्ठजमनुक्तमप्यसाध्यं समुच्चिन्वन्ति ॥ १६ ॥

**कुष्ठेषु तु त्वक्संकोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन, पाकावदरणाङ्गुलिपतनकर्णनासाभङ्गाक्षिरागसत्त्वोत्पत्तयः पित्तेन, कण्डूवर्णभेदशोफास्रावगौरवाणि श्लेष्मणा ॥ १७ ॥**

कुष्ठाना सक्षेपेणोक्तत्वादनुक्तमपि दोषलिङ्गं दर्शयन्नाह,—कुष्ठेष्वित्यादि । वातकार्येषु स्वेदश्चिन्त्यः । 'त्वक्संकोचस्वापस्वेदौ' इत्यन्ये पठन्ति, तत्र नञ् स्वेदनिषेधार्थः । व्याधिस्वभावात् स्वेदोऽपि स्यादित्यपरे । कौण्यं नष्टकरता, सत्त्वोत्पत्तय. क्रिमीणा जन्मानि ॥ १७ ॥

**तत्रादिबलप्रवृत्तं पौण्डरीकं काकणं चासाध्यम् ॥ १८ ॥**

तेषामसाध्यत्वं दर्शयन्नाह,—तत्रेत्यादि । पुण्डरीकमादिबलप्रवृत्तं शुक्रशोणितदोषजमसाध्यम् । ननु चादिबलप्रवृत्तमन्यदपि

१ विपादिकाकुष्ठमाङ्गलभाषायां 'रेगेड्स' (Rhagades) इति नाम्ना प्रसिद्धम् ।
२ किटिभ—सोरायसिस् (Psoriasis).
३ पामाकुष्ठमाङ्गलभाषायां 'एग्झीमा' (Eczema) इति नाम्ना युनानीवैद्यके च 'जर्ब' इति नाम्ना प्रसिद्धम् ।
४ 'सदाहैरसितैश्च' इति पा० ।
५ कच्छूः आङ्गलभाषायां 'स्केबीस' (Scabies) इति नाम्ना प्रसिद्धा ।

१ किलासं युनानीवैद्यके 'बर्स' इति नाम्ना, आङ्गलभाषायां च 'ल्यूकोडर्मा' (Leucoderma) इति नाम्ना प्रसिद्धम् ।
२ 'सभिन्नमण्डल' इति पा० ।
३ 'तेषु' इत्यस्य स्थाने 'ते चाचार्या' इति पाठान्तरम् ।

कुष्ठमसाध्यमेव, यदाह चरक,—'ये चापि केचित्कुलजा विकारास्ताश्चाप्यसाध्यान् प्रवदन्ति तज्ज्ञा.'—इति, कुलजा इत्यनेन दुष्टशुक्रशोणितजा उच्यन्ते । पुण्डरीकग्रहणं सर्वेषामेव महाकुष्ठानामुपलक्षणं, तेषामेवोत्तरोत्तरधात्वनुक्रमेण शुक्रधातोर्दुष्टिजननसामर्थ्यात् । एतेन क्षुद्रकुष्ठेष्वादिवलप्रवृत्तत्वं नास्ति, उत्तरोत्तरधात्वननुक्रमेण शुक्रदोषकरणेऽसामर्थ्यात् । काकणकं चासाध्यम्, उत्पत्तावेव त्रिदोषवलप्रवृत्तत्वात्; धात्वनुक्रमेण हि महाकुष्ठानामस्थिमज्जशुक्रगतानामसाध्यत्वमुपरिष्टादेव वक्ष्यति ॥ १८ ॥

भवन्ति चात्र ।

**यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम् ॥**
**अन्तर्भूमिं विगाहेत मूलैर्वृष्टिविवर्धितैः ॥ १९ ॥**
**एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः ॥**
**क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः २०**

इदानीमप्रतिकारिण उत्तरोत्तरधात्वनुक्रमणे दृष्टान्तं दर्शयन्नाह,—भवन्ति चात्रेत्यादि । यथा वनस्पतिर्वृक्षः, कालप्रकर्षेण कालाधिक्यं प्राप्य, मूलैः कृत्वा, अन्तर्भूमिं विगाहेतेति संवन्धः । त्वचीति अत्र त्वक्शब्देन रस उक्त, रसारब्धत्वात्, तेन रसस्थमित्यर्थ ॥ १९ ॥ २० ॥

**स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते ॥**
**वैवर्ण्यं रूक्षभावश्च कुष्ठे त्वचि समाश्रिते ॥ २१ ॥**
**त्वक्स्वापो रोमहर्षश्च स्वेदस्याभि(ति)प्रवर्तनम् ॥**
**कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥ २२ ॥**
**वाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः ॥**
**तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते २३**
**दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा ॥**
**गात्राणां भेदनं चापि कुष्ठे मेदःसमाश्रिते ॥२४॥**
**नासाभङ्गोऽक्षिरागश्च क्षते च क्रिमिसंभवः ॥**
**भवेत् स्वरोपघातश्च ह्यस्थिमज्जसमाश्रिते ॥२५॥**
**कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ॥**
**शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥२६॥**
**स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः ॥**
**यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ २७ ॥**

धातुगतकुष्ठाना लक्षणमाह,—स्पर्शहानिरित्यादि । प्रागेव रसधातुं क्रोडीकृत्य दोषा कुष्ठारम्भका, अतो रसधातुलक्षणं नोक्तमित्येके । अपरे त्वक्शब्देन रसमाहुः । जायत इत्यत्रापि सवध्यते । विपूयको दुर्गन्धता, जायत इत्यत्रापि सवध्यते । वाहुल्य स्थूलमण्डलता । स्फोट. त्वच' स्फुटनम् । स्थिरत्वं कठिनमण्डलता । केचिदत्रान्यथा पठन्ति, स च पाठोऽभावान्न लिखित । अत्रापि जायत इत्यध्याहार । उपदेहो मलवृद्धि । अत्रापि केचिदन्यथा श्लोकं पठन्ति, सोऽपि पाठोऽभावान्न लिखितः । शुक्रगतस्य कुष्ठस्य लिङ्गं दर्शयन्नाह,—कौण्यमित्यादि । तदपीत्यपिशब्दात् पूर्वोक्तान्यपि रसादिमज्जान्तगतानि लिङ्गानि भवन्ति । कुष्ठितं सजातकुष्ठम्; अन्ये तु कुष्ठवदिति पठन्ति, कुष्ठसहितमित्यर्थ'; अन्ये कुष्ठिलमिति पठन्ति, तत्रापि स एवार्थः । यदा स्त्रीपुंसयोः कुष्ठिनोर्बीजमुपहतं स्यात्तदा तयो. प्रजा नोत्पद्यते; उपतप्तमात्रवीजयोः पुनः प्रजोपताप उत्पद्यते ॥ २१—२७ ॥

**कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम् ॥**
**मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ॥ २८ ॥**

इदानीं धात्वनुक्रमेऽपि साध्यादिभेदं दर्शयन्नाह,—कुष्ठमित्यादि । आत्मवतो जितेन्द्रियस्य ॥ २८ ॥

**ब्रह्मस्त्रीसज्जनवधपरस्वहरणादिभिः ॥**
**कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य संभवम् ॥२९॥**

कुष्ठस्य कर्मजत्वं दर्शयन्नाह—ब्रह्मस्त्रीत्यादि । सज्जन. सत्पुरुष' । परस्वं परद्रव्यम् ॥ २९ ॥

**म्रियते यदि कुष्ठेन पुनर्जातेऽपि गच्छति ॥**
**नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्तितम् ॥३०॥**
**आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम् ॥**
**औषधीनां विशिष्टानां तपसश्च निषेवणात् ॥**
**यस्तेन मुच्यते जन्तुः स पुण्यां गतिमाप्नुयात् ॥३१॥**

कुष्ठं दीर्घरोगाणा प्रधानमिति जन्मान्तरेऽपि तदनुबन्धं दर्शयन्नाह,—म्रियत इत्यादि । गच्छति अनुगत भवतीत्यर्थः, कुष्ठजनकस्य कर्मणोऽक्षीणत्वात् पुनर्भवे । आस्थाय आश्रित्य । स पुण्या गतिमाप्नुयात् क्षीणपापत्वात् ॥ ३० ॥ ३१ ॥

**प्रसङ्गाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात् ॥**
**सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥ ३२ ॥**
**कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ॥**
**औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ ३३ ॥**

इति सुश्रुतसंहितायां निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

संसर्गसभवप्रधानं कुष्ठमाश्रित्य कुष्ठिप्रभृतीनां संसर्गपरिहारं दर्शयन्नाह,—प्रसङ्गादित्यादि । प्रसङ्गादिति प्रसङ्गेन अभ्यासेन कृतात्, पुन पुन कृतादित्यर्थ । इदं विशेषणं गात्रसस्पर्शादिभि. सर्वैः सह प्रत्येकं सवध्यते । सह शय्यासनादिति एकशय्यासनस्थिते । माल्यं पुष्पम् । औपसर्गिकरोगा शीतलिकादय । सक्रामन्ति आविशन्ति ॥ ३२ ॥ ३३ ॥

इति श्रीडल्हणविरचिताया निवन्धसग्रहाख्याया सुश्रुतव्याख्याया निदानस्थाने पञ्चमोऽध्याय. ॥ ५ ॥

## षष्ठोऽध्यायः ।

**अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यतीति ॥ ३ ॥**

प्रमेहहेतुमाह,—दिवास्वप्नेत्यादि । प्रसक्तं प्रकर्षेण सक्तमतिशयेनानुपक्षिणम् । मेद्यं मेदुर मेदोजनकमित्यर्थ । पुरुषं जानीयात् प्रमेही भविष्यति । तत्राहुरेके,—स्त्रीणां प्रमेहा न भवन्ति, तथाच तन्त्रान्तरे—"रज प्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीर दोषाश्च न प्रमेहन्त्यत स्त्रियः" इति; एतत्तु न युक्तं, सर्वतन्त्राप्रसिद्धे प्रत्यक्षविरोधाच्च ॥ ३ ॥

**तस्य चैवंप्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा वस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहान् जनयन्ति ॥ ४ ॥**

संप्राप्तिं दर्शयन्नाह,—तस्येत्यादि । अपरिपक्वा आमा । मेदसेति अत्रापिशब्दो लुप्तो द्रष्टव्य , तेन वसादयो ग्राह्याः, अन्ये तु मेदश्चापरिपक्वमिति पठन्ति, चकारेणानुक्तानपि वसादीन् समुच्चिन्वन्ति । उपेत्य गत्वा । निर्भिद्यन्ते नि.सरन्तीत्यर्थ. । अन्ये तु 'विनिर्भिद्यन्ते' इति पठित्वा तत्रैव स्थितिं कुर्वन्तीति व्याख्यानयन्ति, अपरे स्वतिद्रवत्व यान्तीत्याहुः ॥ ४ ॥

**तेषां तु पूर्वरूपाणि—हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् ॥ ५ ॥**

पूर्वरूपमाह,—तेषामित्यादि । केशाना जटिलीभावोऽन्योन्यमिलनं, स्वेदमलबाहुल्याद्रोगप्रभावाच्च ॥ ५ ॥

**तत्राविलप्रभूतमूत्रलक्षणाः सर्व एव प्रमेहाः ॥ ६ ॥**

प्रमेहाणा सामान्यं लक्षणमाह,—तत्रेत्यादि । आविलं समलम् ॥ ६ ॥

**सर्व एव सर्वदोषसमुत्थाः सह पिडकाभिः ॥ ७ ॥**

तेषा प्रमेहाणा प्रमेहपिडकानां च दोष दर्शयन्नाह,—सर्व एवेत्यादि । एतेन प्रमेहाणा प्रमेहपिडकाना च कुष्ठवत् सर्वदोषजत्वमुक्तम् ॥ ७ ॥

**तत्र, कफादुदकेक्षुवालिकासुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहा दश साध्याः, दोषदूष्याणां समक्रियत्वात्; पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् याप्याः, दोषदूष्याणां विषमक्रियत्वात्; वातात्सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसाध्यतमाः, महात्ययिकत्वात् ॥ ८ ॥**

सर्वेषा सर्वदोषजत्वेऽप्युत्कर्षतो दोषग्रहणं दर्शयन्नाह,—तत्रेत्यादि । उदकमेह', इक्षुवालिकामेह', सुरामेह , सिकतामेहः, शनैर्मेह., लवणमेहः, पिष्टमेहः, सान्द्रमेह., शुक्रमेह', फेनमेहश्चेति दश प्रमेहा साध्या यद्यतिशयेन मेदो दूषितं न भवति । दोषदूष्याणा समक्रियत्वादिति अत्र दोष श्लेष्मा, दूष्याणि रसमांसमेदोमज्जशुक्लसीकौजांसि, एषां कटुतिक्तकषायादिभि' समैव क्रिया । पित्तादित्यादि । याप्या इति अत्रापि यद्यतिशयेन मेदो दूषित न भवति । दोषदूष्याणा विषमक्रियत्वादिति अत्र दोष. पित्तं, दूष्याणि रसमांसादीनि, एतेषां तु विषमा क्रिया पित्तहन्त्री रसमांसाद्युत्पादिकेति । वातादित्यादि-महात्ययिकत्वात् शीघ्र विनाशकारित्वादिति, महात्ययिकत्वं पुनरेषामुत्तरोत्तरसारतरधातुस्रावकरत्वात्, विषमक्रियत्वाच्चेत्यत्रापि सम्बध्यते ॥ ८ ॥

**तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयति, वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमेहान्, कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातप्रमेहान् ॥ ९ ॥**

इदानीं सर्वेषामेव सर्वजत्वं प्रकटयन्नाह,—तत्रेत्यादि ॥९॥

**तत्र, श्वेतमवेदनमुदकसदृशमुदकमेही मेहति; इक्षुरसतुल्यमिक्षुवालिकामेही, सुरामेही सुरातुल्यं; सरुजं सिकतानुविद्धं सिकतामेही; शनैः सकफं मूत्रं शनैर्मेही; विशदं लवणतुल्यं लवणमेही; हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही, आविलं सान्द्रं सान्द्रमेही, शुक्रतुल्यं शुक्रमेही; स्तोकं स्तोकं सफेनं फेनमेही मेहति ॥ १० ॥**

---

१ प्रमेह—डिसीजेस् ऑफ् दि युरीन् (Diseases of the urine). प्रमेहो युनानीवैद्यके 'जीर्यान' इति नाम्ना प्रसिद्ध ।

१ 'कफादुदकेक्षुसुरा०' इति पा० ।
२ 'इक्षुमेहः' इति पा० ।
३ उदकमेह —डायबिटिस् इन्सिपिडस (Diabete Insipidus)
४ 'इक्षुरसतुल्यमिक्षुमेही' इति पा० ।
५ सुरामेहः—फॉस्फेचूरिआ (Phosphaturia).
६ सिकतामेह.—यूरेट्स् इन् यूरिन् (Urates in urine)
७ पिष्टमेह. आङ्ग्लभाषाया 'काइल्यूरिया' (Chyluria) इति नाम्ना प्रसिद्ध ।
८ सान्द्रमेह'—म्युकस इन यूरिन (Mucous in Urine)
९ शुक्रमेह. युनानीवैद्यके 'जीर्यान मनी' इति नाम्ना आङ्ग्लभाषाया च 'स्पर्मॅटोरिया' (Spermatorrhœa) इति नाम्ना प्रसिद्धः ।

कफजानामनुक्रमेण लक्षणं दर्शयन्नाह—तत्रेत्यादि । सिकतानुविद्धं वालुकासिश्रम् । मूत्रं पिच्छिलम् । लवणतुल्यं लवणाम्बुतुल्यम् । हृष्टरोमा प्राप्तरोमाञ्च । पिष्टरसतुल्य पिष्टमिश्रोदकतुल्यम् । आविलमलर्थं कलुषं, पुनर्वचनात् । मेहति मूत्रयतीत्यर्थः ॥ १० ॥

**अत ऊर्ध्वं पित्तनिमित्तान् वक्ष्यामः-सफेनमच्छं नीलं नीलमेही मेहति; सदाहं हरिद्राभं हरिद्रामेही; अम्लरसगन्धमम्लमेही; स्रुतक्षारप्रतिमं क्षारमेही; मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही, शोणितप्रकाशं शोणितमेही मेहति ॥ ११ ॥**

अत इत्यादि । स्रुतक्षारप्रतिमं गलितक्षारद्रवतुल्यम् । मञ्जिष्ठोदकप्रकाशं शोणितप्रकाशं च मूत्र रक्तपित्तेऽपि भवति, ततः कोऽयं प्रमेहविशेषः ? अत्रोच्यते—रक्तपित्ते प्रमेहपूर्वरूपं न भवति, मञ्जिष्ठाशोणितमेहयोस्तु प्रमेहपूर्वरूपसभव इति विशेषः ॥ ११ ॥

**अत ऊर्ध्वं वातनिमित्तान् वक्ष्यामः—सर्पिःप्रकाशं सर्पिर्मेही मेहति; वसाप्रकाशं वसामेही; क्षौद्ररसवर्णं क्षौद्रमेही; मत्तमातङ्गवदनुप्रबन्धं हस्तिमेही मेहति ॥ १२ ॥**

अत इत्यादि । अनुप्रबन्धं सततम् ॥ १२ ॥

**मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्यारोचकाविपाकाः कफप्रसेकच्छर्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः; वृषणयोरवदरणं वस्तिभेदो मेढ्रतोदो हृदि शूलमम्लीकाज्वरातीसारारोचका वमथुः परिधूमायनं दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रनेत्रत्वं चेति पैत्तिकानां; हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वं चेति वातजानाम् । एवमेते विंशतिः प्रमेहाः सोपद्रवा व्याख्याताः॥१३॥**

१ हारिद्रमेह—बाईल इन यूरिन ( Bile in Urine ).
२ क्षारमेह—ॲल्कलाइन यूरिन ( Alkaline in Urine ).
३ माञ्जिष्ठमेह शोणितमेहश्च आङ्ग्लभाषाया 'हिमॅच्यूरिआ (Hæmaturea) इति नाम्ना प्रसिद्धः ।
४ 'रक्तपित्तमूत्रे' इति पा० ।
५ वसामेह आङ्ग्लभाषायां 'ॲल्व्युमिन्यूरिआ' ( Albuminuria ) इति नाम्ना प्रसिद्ध ।
६ मधुमेहः युनानीवैद्यके 'झयाबीतुस' इति नाम्ना आङ्ग्लभाषाया च 'डायाबिटिस मेलिटस' ( Diabetes-mellitus ) इति नाम्ना प्रसिद्ध ।
७ 'अनुप्रबद्ध' इति पा० ।
८ हस्तिमेह—इन्कोन्टिनन्स् ऑफ यूरिन (Incontinence of urine)
९ 'परिधूपन' इति पा० ।

इदानीं प्रतिदोषमुपद्रवान् दर्शयन्नाह,—मक्षिकोपसर्पणमित्यादि । अवदरणं विदरण, अम्लीका अम्लोद्गारः, वमथुः छर्दिः, परिधूमायनं समन्ततस्तापः, दाहोऽग्निदग्धस्येव । लौल्यं सर्वरसाभिकाङ्क्षा वातजग्रहणीवत् ॥ १३ ॥

**तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिडका जायन्ते । तद्यथा—शराविका, सर्षपिका, कच्छपिका, जालिनी, विनता, पुत्रिणी, मसूरिका, अलजी, विदारिका, विद्रधिका चेति ॥ १४ ॥**

पिडकानामुपद्रवविशेषाणा संप्राप्तिं दर्शयन्नाह,—तत्रेत्यादि । वसा मांसस्नेहः, सकलशरीरस्नेह इत्यन्ये । अभिपन्नशरीरस्य व्याप्तशरीरस्य । अनुगतधातोर्व्याप्तधातोः । पिडकास्तु प्रायेणाधःकाय एव । तासा पिडकाना नामान्याह,—तद्यथेत्यादि ॥ १४ ॥

**शरावमात्रा तद्रूपा निम्नमध्या शराविका ॥**
**गौरसर्षपसंस्थाना तत्प्रमाणा च सार्षपी ॥१५॥**
**सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥**
**जालिनी तीव्रदाहा तु मांसजालसमावृता ॥१६॥**
**महती पिडका नीला पिडका विनता स्मृता ॥**
**महत्यल्पाचिता ज्ञेया पिडका सा तु पुत्रिणी १७**
**मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका ॥**
**रक्ता सिता स्फोटवती दारुणा त्वलजी भवेत् १८**
**विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥**
**विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥१९॥**

तासा लक्षणमाह,—शरावमात्रेत्यादि । गौरसर्षपसंस्थाना गौरसर्षपाकारा । जालिनीत्यादि । यद्यपि 'ये यन्मया स्मृता मेहास्तेषामेतास्तु तत्कृताः'—इत्यग्रे वक्ष्यते, तथाऽपि जालिनी पित्तोत्तरा ज्ञेया, तद्वचनस्य वाहुल्येनोक्तत्वात् । महती स्थूला । अल्पाचितेति सूक्ष्मपिडकावेष्टिता ॥ १५—१९ ॥

**ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तत्कृताः ॥**

पिडकाजनकान् दोषानाह,—य इत्यादि । ये यन्मया यद्दोषारब्धाः, तेषा प्रमेहाणा, एता इति पिडका ॥—

**गुदे हृदि शिरस्यंसे पृष्ठे मर्मणि चोत्थिताः ॥**
**सोपद्रवा दुर्बलाग्नेः पिडकाः परिवर्जयेत् ॥२०॥**

तासामसाध्यता दर्शयन्नाह,—गुदे हृदीत्यादि । असो बाहुशिरः । सोपद्रवा इति "तृट्कासमांससंकोथमोहहिक्कामदज्वराः । विसर्पमर्मसंरोधा पिडकानामुपद्रवाः" । "सोपद्रवाल्पकायाग्नेः पिडकाः परिवर्जयेत्" इति केचित् पठन्ति । तत्र सोपद्रवेति पुरुषविशेषणम् ॥ २० ॥

१ प्रमेहपीडिका—कार्बेन्कल ( Carbuncle ).
२ 'मांसजालसमाश्रिता' इति पा० ।
३ 'दुर्बलस्य' इति पा० ।

**कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः ॥**
**अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः॥२१॥**

वातजानामसाध्यत्वे हेतुं दर्शयन्नाह,—कृत्स्नं शरीरमित्यादि । निष्पीड्य निश्चोतयित्वा मूत्रमार्गेण समस्तान् धातून् प्रवाहयित्वेत्यर्थः । वसेत्युपलक्षणं, तेन ओजोलसीकयोर्ग्रहणम् । अधः प्रक्रमते अधः स्फीतीभवति प्रबलीभवतीर्थः । गयदासाचार्यस्तु आपातनिकापूर्वं प्रमेहपूर्वरूपाणामित्यादिश्लोकत्रयमन्यथा पठति । असाध्यास्त्विति पूर्वहेतुभ्या चेति तुशब्दार्थः ॥ २१ ॥

**प्रमेहपूर्वरूपाणामाकृतिर्यत्र दृश्यते ॥**
**किंचिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत्॥२२॥**

इदानीं प्रमेहहेतुयुक्तस्य पुरुषस्य सामान्याकारेण लक्षणमाह,—प्रमेहपूर्वरूपाणामित्यादि ॥ २२ ॥

**कृत्स्नान्यर्धानि वा यस्मिन् पूर्वरूपाणि मानवे ॥**
**प्रवृद्ध(त्त)मूत्रमत्यर्थं तं प्रमेहिणमादिशेत्॥२३॥**

प्रमेहस्य पूर्वोक्तसामान्यलक्षणस्य शेषं लक्षणमाह—कृत्स्नानीत्यादि । गयदासस्त्वापातनिकापूर्वं प्रमेहपूर्वरूपाणीत्यादि श्लोकमन्यथा पठति; यथा—इदानीं प्रमेहपिडकाचिकित्सितनिर्देश्यमर्थं पञ्चगुणाश्रयं पूर्वरूपशोफपिडकावस्थाख्यं प्रतिपादयन्नाह,—प्रमेहपूर्वरूपाणामित्यादि । तस्मिन्मेहो भविष्यतीति मेहस्य तत् पूर्वरूपम् । तत्र च पूर्वरूपेऽपतर्पणं वनस्पतिकषायपानादिकं च कर्तव्यम् । प्रवृत्तमूत्रमत्यर्थमिति रूपज्ञानम् । तत्र रूपचिकित्साविशेषः । तदुक्तम्—'एवमकुर्वतस्तस्य हीनप्रथमकर्मगुणस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरीभवति प्रमेहश्चाभिव्यक्तो भवति । तत्रोभयतः सशोधनं, एवमकुर्वतस्तस्य दोषा प्रवृद्धा मांसशोणिते प्रदूष्य शोथं जनयन्त्युपद्रवांश्च कांश्चित्, तत्रोक्तः प्रतीकारः सिरामोक्षश्च, एतदकुर्वतः पिडकाः, तत्कर्माप्यकुर्वत पञ्चत्वम्' इति ॥ २३ ॥

**पिडकापीडितं गाढमुपसृष्टमुपद्रवैः ॥**
**मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्तितः ॥२४॥**

सर्वप्रमेहाणामवस्थान्तरप्राप्ताना सज्ञान्तरमसाध्यत्वं च दर्शयन्नाह,—पिडकापीडितमित्यादि । स चासाध्य इति चकार उत्पत्तौ वातजानामसाध्यत्वं समुच्चिनोति । उत्पत्तौ च सहजो याप्यत्वादसाध्यः, पित्तजः पुनरसाध्यतरः, वातजः पुनरुत्पत्तिक्रमेणासाध्यतमः ॥ २४ ॥

**स चापि गमनात् स्थानं स्थानादासनमिच्छति ॥**
**आसनाद्वृणुते शय्यां शयनात् स्वप्नमिच्छति २५**

इदानीं मधुमेहिनो विहाराख्यं पञ्चविधक्रियाश्रयं लिङ्गं दर्शयन्नाह,—स चापीत्यादि । स्थानमूर्ध्वभवनमिच्छतीति संबन्धः । वृणुते प्रार्थयते । शयनात् शय्यायाः ॥ २५ ॥

**यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शबलबभ्रुकपिलकपोतमेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति, एवमेव दोषधातुमलाहारविशेषेणोत्कर्षापकर्षकृतेन संयोगविशेषेण प्रमेहाणां नानाकरणं भवति ॥ २६ ॥**

इदानीं दोषाणा त्रयाणामपि यथा विंशतिप्रमेहसंभवस्तथोपमानेनाह,—यथेत्यादि । पञ्चाना वर्णाना सितहरितकृष्णपीतरक्ताना, उत्कर्षापकर्षकृतेन वृद्धिह्रासकृतेन, बभ्रुः कपिलः पिङ्गल, कपोत कपोताभ, मेचकः श्यामल. । मलग्रहणमुपधातुभूतवसालसीकयोरुदकस्य चोपलक्षणम् ॥ २६ ॥

**भवति चात्र ।**

**सर्वे एव प्रमेहास्तु कालेनाप्रतिकारिणः ॥**
**मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ २७ ॥**

**इति सुश्रुतसंहितायां निदानस्थाने प्रमेहनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥**

इदानी सर्वेष्वेव प्रमेहेषु पूर्वरूपादीनामुपेक्षालणमनर्थं दर्शयन्नाह—भवति चात्रेत्यादि । कालः प्रथमक्रियाकालादिकः । अप्रतिकुर्वतोऽप्रतिक्रियमाणस्य ॥ २७ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्याया निदानस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

**अथात उदराणां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**धन्वन्तरिर्धर्मभृतां वरिष्ठो**
**राजर्षिरिन्द्रप्रतिमोऽभवद्यः ॥**
**ब्रह्मर्षिपुत्रं विनयोपपन्नं**
**शिष्यं शुभं सुश्रुतमन्वशास्त्सः ॥ ३ ॥**

यो धन्वन्तरिरभवत् स सुश्रुतमन्वशादिति सबन्धः, शिक्षितवानित्यर्थः । धर्मभृता धार्मिकाणा मध्ये । इन्द्रप्रतिमो ज्ञानैश्वर्यादिभिः । ब्रह्मर्षिर्विश्वामित्र, राजर्षिरपि तपसा ब्रह्मर्षित्वं प्राप्तवान् । विनयोपपन्नं जितेन्द्रियम् । शुभमिति पूर्वोक्तैरन्वयवय शीलादिगुणैरुपेतम् ॥ ३ ॥

---

१ 'तस्मिन्मेहो भविष्यति' इति पाठान्तरम् ।
२ 'प्रमेह त विनिर्दिशेत्' इति पाठान्तरम् ।
३ 'सुप्तमिच्छति' इति पा० ।

१ 'नानाकारण' इति पा० ।
२ 'बभूव' इति पा० ।

पृथक् समस्तैरपि चेह दोषैः
प्लीहोदरं बद्धगुदं तथैव ॥
आगन्तुकं सप्तममष्टमं च
दकोदरं चेति वदन्ति तानि ॥ ४ ॥

उदराणां सङ्ख्यामाह,—पृथगित्यादि । पृथग्दोषैस्त्रीणि, समस्तैर्दोषैरेकं, एतेन चत्वारि दोषप्रधानानि । इहेति अस्मिन् शास्त्रे । तानीति उदराणीत्यर्थः । प्लीहोदरादीनि चत्वारि दूष्यप्रधानानि । अष्टममिति सङ्ख्योक्त्या प्लीहोदरयकृद्दाल्युदरयोरैक्यमेव ज्ञातव्यम् ॥ ४ ॥

सुदुर्बलाग्नेरहिताशनस्य
संशुष्कपूत्यन्ननिषेवणाद्वा ॥
स्नेहादिमिथ्याचरणाच्च जन्तो-
र्वृद्धिं गताः कोष्ठमभिप्रपन्नाः ॥ ५ ॥
गुल्माकृतिव्यञ्जितलक्षणानि
कुर्वन्ति घोराण्युदराणि दोषाः ॥

उदराणां हेतुं दर्शयन्नाह,—सुदुर्बलाग्नेरित्यादि । दुर्बलाग्नेरत्यन्तनष्टाग्नेः । अहिताशनस्येति विरुद्धसमशनाध्यशनविषमाशनस्य । स्नेहादीत्यादिशब्दाद्वमनविरेचनास्थापनानुवासनपरिग्रहः । मिथ्याचरणं यथोक्तानुष्ठानपरित्यागः । जन्तोः प्राणिनः । अभिप्रपन्नाः प्राप्ता इत्यर्थः । किंविशिष्टान्युदराणि कुर्वन्ति? गुल्माकृतिव्यञ्जितलक्षणानि गुल्माकृत्या गुल्मरूपेण व्यञ्जितानि प्रकटितानि लक्षणानि येषां तानि तथा । पुनरपि किंविशिष्टानि? घोराणि कृच्छ्रतमानि ॥ ५ ॥—

कोष्ठादुपस्नेहवदन्नसारो
निःसृत्य दुष्टोऽनिलवेगनुन्नः ॥ ६ ॥
त्वचः समुन्नम्य शनैः समन्ता-
द्विवर्धमानो जठरं करोति ॥

सम्प्राप्तिं दर्शयन्नाह,—कोष्ठादित्यादि । उपस्नेहवदिति नवघटाद्युपस्नेहो यथाऽणुतमस्रोतोभिर्बहिः स्रवन् दृश्यते तद्वत् कोष्ठादन्नसारोऽन्नरसो निःसृत्य, शनैः क्रमेण, जठरमुदराख्यं रोगं करोतीति सम्बन्धः । कोष्ठशब्देनात्राहारपाकाधार उच्यते । किंभूतोऽन्नसारो? दुष्टः । पुनः किंभूतः? अनिलवेगनुन्नो वातवेगप्रेरितः । किं कृत्वा? त्वचः समुन्नम्य आनद्धां कृत्वा । पुनः किंभूतो रसः? समन्ताद्विवर्धमानः समन्तात् सर्वतो वृद्धिं गच्छन् ॥ ६ ॥—

तत्पूर्वरूपं बलवर्णकाङ्क्षा-
वलीविनाशो जठरे हि राज्यः ॥ ७ ॥
जीर्णापरिज्ञानविदाहवत्यो
वस्तौ रुजः पादगतश्च शोफः ॥

पूर्वरूपमाह—तदित्यादि । विनाशशब्दो बलादिभिः प्रत्येकं सम्बध्यते । काङ्क्षा अन्नाभिलाषः । वली त्वक्सङ्कोचः । राज्यो रेखा 'भवन्ति' इति शेषः । जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुज इति जीर्णापरिज्ञानविदाहौ विद्येते यासु वस्तिरुजासु तास्तथा । जीर्णापरिज्ञानमन्नपरिणामानिश्चयः । जीर्णापरिज्ञानं तु यथासम्भवत्वात् पुरुषस्यैव ज्ञेयम् ॥ ७ ॥—

संगृह्य पार्श्वोदरपृष्ठनाभी-
र्यद्वर्धते कृष्णसिरावनद्धम् ॥ ८ ॥
सशूलमानाहवदुग्रशब्दं
सतोदभेदं पवनात्मकं तत् ॥

वातोदरमाह—संगृह्येत्यादि ॥ ८ ॥—

यच्चोषतृष्णाज्वरदाहयुक्तं
पीतं सिरा भान्ति च यत्र पीताः ॥ ९ ॥
पीताक्षिविण्मूत्रनखाननस्य
पित्तोदरं तत्त्वचिराभिवृद्धि ॥

पित्तोदरमाह—यदित्यादि । अचिराभिवृद्धि शीघ्रवर्धनशीलम् ॥ ९ ॥—

यच्छीतलं शुक्लसिरावनद्धं
गुरु स्थिरं शुक्लनखाननस्य ॥ १० ॥
स्निग्धं महच्छोफयुतं ससादं
कफोदरं तत्तु चिराभिवृद्धि ॥

श्लेष्मोदरमाह,—यच्छीतलमित्यादि । स्थिरं कठिनं, ससादमङ्गग्लानियुक्तम् ॥ १० ॥—

स्त्रियोऽन्नपानं नखरोममूत्र-
विडार्तवैर्युक्तमसाधुवृत्ताः ॥ ११ ॥
यस्मै प्रयच्छन्त्यरयो गरांश्च
दुष्टाम्बुदूषीविषसेवनाद्वा ॥
तेनाशु रक्तं कुपिताश्च दोषाः
कुर्वन्ति घोरं जठरं त्रिलिङ्गम् ॥ १२ ॥
तच्छीतवाताभ्रसमुद्भवेषु[1]
विशेषतः कुप्यति दह्यते च
स चातुरो मूर्च्छति संप्रसक्तं
पाण्डुः कृशः शुष्यति तृष्णया च ॥ १३ ॥
प्रकीर्तितं दूष्युदरं तु घोरं

सन्निपातोदरमाह,—स्त्रिय इत्यादि । स्त्रियोऽन्नपानं नखरोममूत्रविडार्तवयुक्तं यस्मै पुरुषाय प्रयच्छन्ति ददति । किंभूताः स्त्रियः? असाधुवृत्ता दुराचाराः । स्त्रीग्रहणमत्रोपलक्षणं, तेनान्येऽपि सन्निहिता अविवेकिनो ग्राह्याः । अरयः शत्रवः । गरान् कृत्रिमविषाणि यस्मै प्रयच्छन्ति । दुष्टाम्बु सविषमत्स्यादिसम्बन्धात् । विषमेव दावाग्निवातातपाद्यभिभवेन मन्दतां गतं विषपीतस्य वा विषं दूषीविषं, तेन नखरोमादिना विषकल्पेन गरेण दूषीविषेण वाऽऽशु शीघ्रं रक्तं कुपित-

[1] 'तच्छीतवाते भृशदुर्दिने च' इति पा० ।

मिति बोद्धव्यम् । त्रिलिङ्गं वातपित्तश्लेष्मलिङ्गम् । प्रसक्तं निरन्तरम् । दूष्युदरमिति यदेव सान्निपातिकोदरं तदेव दूष्युदरम्, एतेन न सख्यातिरेक । घोरं भयानकं, न पुनर्घोरं कष्टकारि ॥ ११—१३ ॥—

प्लीहोदरं कीर्तयतो निबोध ॥
विदाह्यभिष्यन्दिरतस्य जन्तोः
प्रदुष्टमत्यर्थमसृक् कफश्च ॥ १४ ॥
प्लीहाभिवृद्धिं सततं करोति
प्लीहोदरं तत् प्रवदन्ति तज्ज्ञाः ॥
वामे च पार्श्वे परिवृद्धिमेति
विशेषतः सीदति चातुरोऽत्र ॥ १५ ॥
मन्दज्वराग्निः कफपित्तलिङ्गै-
रुपद्रुतः क्षीणबलोऽतिपाण्डुः॥

निबोध जानीहि । अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजनकम् । असृक् कफश्चेति असृग्ग्रहणेन पित्तस्यापि ग्रहणम् । प्लीहा उदरस्य वामपार्श्वस्थित । सीदति अङ्गग्लानियुक्तो भवति । अत्र प्लीहोदरे ॥ १४ ॥ १५ ॥—

सव्येतरस्मिन् यकृति प्रदुष्टे
ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १६ ॥

प्लीहोदरे एव यकृद्दाल्युदरस्यावरोधं दर्शयन्नाह,—सव्येतरस्मिन्नित्यादि । सव्येतरस्मिन् दक्षिणपार्श्वे । तदेव प्लीहोदरं यकृद्दाल्युदर ज्ञेयम् । क्व ज्ञेयमित्याह,—यकृति कालखण्डे, किंभूते ? प्रदुष्टे, एतेन न सख्यातिरेकः ॥ १६ ॥

यस्यान्त्रमन्नैरुपलेपिभिर्वा
बालाश्मभिर्वा सहितैः पृथग्वा ॥
संचीयते तत्र मलः सदोषः
क्रमेण नाड्यामिव संकरो हि ॥ १७ ॥
निरुध्यते चास्य गुदे पुरीषं
निरेति कृच्छ्रादपि चाल्पमल्पम् ॥
हृन्नाभिमध्ये परिवृद्धिमेति
त(य)च्चोदरं विट्समगन्धिकं च ॥ १८ ॥
प्रच्छर्दयन् बद्धगुदी विभाव्यः,

बद्धगुदं दर्शयन्नाह,—यस्येत्यादि । यस्य पुरुषस्य अन्त्रं निरुध्यत इति सबन्ध । कैर्निरुध्यत इत्याह,—अन्नैरित्यादि । उपलेपिभि पिच्छिलादिभिः । वा अत्र समुच्चये । सहितैरिति एकत्र मिलितैः समुदितैरित्यर्थः । पृथग्वेति एकैकैरित्यर्थः । मल. पुरीषं, सदोषो दोषत्रयसहित. । नाड्या प्रणालिकायाम् । सङ्करोऽवकरः, प्रचुरतृणादिसमूह इत्यर्थ । निरेति निःसरति । बद्धगुदी विभाव्यः स पुरुषो बद्धगुदी ज्ञेय ॥ १७ ॥ १८ ॥—

ततः परिस्राव्युदरं निबोध ॥
शल्यं यदन्नोपहितं तदन्त्रं
भिनत्ति यस्यागतमन्यथा वा ॥ १९ ॥
तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः
स्रावः स्रवेद्वै गुदतस्तु भूयः ॥
नाभेरधश्चोदरमेति वृद्धिं
निस्तुद्यतेऽतीव विदह्यते च ॥ २० ॥
एतत् परिस्राव्युदरं प्रदिष्टं

परिस्राव्युदरमाह,—तत इत्यादि । यच्छल्यमन्नोपहितम - न्नसम्बद्धं भुक्तं, तदन्त्रं भिनत्ति विदारयति । यस्य पुरुषस्य । शल्यं शर्कराकाष्ठास्थिकण्टकादिकम् । आगतमन्यथा वेति वाशब्दोऽवधारणे, तेनान्यथैव विलोमेन तिर्यगेवागतं नत्वनुलोमेन । स्रुतो गलित. ॥ १९ ॥ २० ॥—

दकोदरं कीर्तयतो निबोध ॥
यः स्नेहपीतोऽप्यनुवासितो वा
वान्तो विरिक्तोऽप्यथवा निरूढः ॥ २१ ॥
पिबेज्जलं शीतलमाशु तस्य
स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेष्वथवाऽपि तेषु
दकोदरं पूर्ववदभ्युपैति ॥ २२ ॥
स्निग्धं महत्संपरिवृत्तनाभि
भृशोन्नतं पूर्णमिवाम्बुना च ॥
यथा दृतिः क्षुभ्यति कम्पते च
शब्दायते चापि दकोदरं तत् ॥ २३ ॥

दकोदरमाह,—दकोदरमित्यादि । दकोदरमुदकोदरमित्यर्थं । तद्वहानि तोयवहानि । स्नेहोपलिप्तेष्वथवाऽपि तेष्विति स्नेहादिपानं विनाऽपि तेषु स्रोत सु स्नेहोपलिप्तेषु यदा शीतलं जलं पिबेत्तदाऽपीत्यर्थ । पूर्ववदिति क्षतान्त्रोदरे यथा सलिलस्याधोगामित्वादधो नाभेरुदरोत्पत्तिर्यथा च गुदादास्रावस्तद्वदिति;

---

१ प्लीहोदर युनानीवैद्यके 'वरम उल तीहाल' इति नाम्ना आङ्ग्लभाषायां च 'एन्लार्जमेन्ट ऑफ स्प्लीन' ( Enlargement of Spleen ) इति नाम्ना प्रसिद्धम् ।

२ यकृद्दाल्युदर युनानीवैद्यके 'वरम उल कीवद' इति नाम्ना आङ्ग्लभाषाया च 'हेपॅटिक् एन्लार्जमेन्ट' ( Hepatic Enlargement ) इति नाम्ना प्रसिद्धम् ।

३ 'पिहित यथावत्' इति पा० ।

४ बद्धगुदोदरमाङ्ग्लभाषायां 'इन्टेस्टायूनल ऑब्स्ट्रक्शन' ( Intestinal obstruction ) इति नाम्ना प्रसिद्धम् ।

१ 'पुरीष' इति पा० ।

२ परिस्राव्युदरमाङ्ग्लभाषायां 'अल्सरेशन ऑफ धी बावेल' ( Ulceration of the Bowel ) इति नाम्ना प्रसिद्धम् ।

३ जलोदर युनानीवैद्यके 'इस्तिस्का' इति नाम्ना आङ्ग्लभाषायां च 'ॲसायटिस' ( Ascites ) इति नाम्ना प्रसिद्धम् ।

जेज्झटाचार्येण पुन पूर्ववदिलन्नान्यान्युदराणि यथा भवन्ति तथेदमपीति व्याख्यातं, तन्नेच्छति गयदासाचार्य । परिवृत्तनाभि उच्छलितनाभि । दृतिः खल्ला । क्षुभ्यति चलति । कम्पते चेति कम्पनमतिशयेन चलनम् ॥ २१—२३ ॥

**आध्मानं गमनेऽशक्तिर्दौर्वल्यं दुर्बलाग्निता ॥**
**शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥**
**दाहस्तृष्णा च सर्वेषु जठरेषु भवन्ति हि ॥ २४ ॥**

तेषामष्टानामपि सामान्यं लिङ्गं दर्शयन्नाह,—आध्मानमित्यादि । जेज्झटाचार्येण पुनरेते उपद्रवा व्याख्याता , तन्नेच्छति गयदासाचार्य ॥ २४ ॥

**अन्ते सलिलभावं हि भजन्ते जठराणि तु ॥**
**सर्वाण्येव परीपाकात्तदा तानि विवर्जयेत् ॥२५॥**

**इति सुश्रुतसंहितायां निदानस्थाने उदरनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥**

साध्यासाध्यविभागमाह,—अन्त इत्यादि । परिपाकात् परिणामेन दकोदरता सर्वेषामेव, अन्यान्युदराणि परिपाकादुदकभावं भजन्ते, दकोदर प्रागेवेति विशेष ॥ २५ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्याया सुश्रुतव्याख्यायां निदानस्थाने सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

**अथातो मूढगर्भनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । मूढो निरुद्धगतिः । तदुक्तं—"सर्वावयवसंपूर्णो मनोबुद्ध्यादिसयुत । विगुणापानसमूढो मूढगर्भोऽभिधीयते"—इति ॥ १ ॥ २ ॥

**ग्राम्यधर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनशोकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः, फलमिव वृन्तबन्धनादभिघातविशेषैः; स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसंक्षोभमापादयति, तस्या जठरसंक्षोभाद्वायुरपानो मूढः पार्श्ववस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं च्यावयति तरुणं शोणितस्रावेण, तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानं विगुणापानसंमोहितं गर्भं मूढगर्भमित्याचक्षते ॥ ३ ॥**

तस्य हेतुं दर्शयन्नाह,—ग्राम्यधर्मेत्यादि । ग्राम्यधर्मो मैथुनं, यानं रथादि, वाहनमश्वादि, अध्वगमनं पद्भ्यां मार्गगमनं, प्रस्खलनमागुल्फनादि, प्रपतनं प्रासादादेः सकाशादतिशयेन पतनं, प्रपीडनमतिशयेन पीडनं, प्रधावनमतिशयेन धावनं, अभिघात शल्लोष्टकशादिभिः प्रहार , वेगाभिघातो वाताद्यवरोध , प्रेङ्खोलनं हिन्दोलन, गर्भशातन भेषजेन गर्भपातनम् । केचिदेतद्द्वयमन्यथा पठन्ति, तत्त्वभावान्न लिखितम् । बन्धनमत्र गर्भाशयप्रतिबद्धाः सिरा पेश्यश्च । मोचने उपमानमाह,—फलमित्यादि । एतेनैतदुक्त भवति—यथा वृक्षेऽपरिपक्वं फलमभिघातैरकाल एव पतति तद्वद्यथोक्तपातनहेतुसामर्थ्यादप्रसवकाल एव गर्भ पतति । अतिक्रम्य उल्लङ्घ्य, विवरैरन्तरालै , अवस्रंसमानोऽध पतन्, कोष्ठशब्देनामाशयपक्वाशयादिस्थानं, संक्षोभश्चलनं, तस्याः स्त्रिया , मूढो विमार्गगामी, अन्यतममेकतमं, आपाद्य निर्वर्त्य । तरुण गर्भमपानो मूढ सन् च्यावयतीति सबन्ध । तरुणमघनाङ्गमव्यक्तचेतनम् । मूढगर्भस्य निरुक्तिमाह,—तमेवेत्यादि । असम्यगागतं विलोमभागेनागतं, अवाग्गमनात् । अपत्यपथं योनिम् । अनुप्राप्तमाश्रितम् । अनिरस्यमानमनिःसरन्तम् । संमोहितं मूर्च्छितम् ॥ ३ ॥

**ततः स कीलः प्रतिखुरो वीजकः परिघ इति । तत्र, ऊर्ध्ववाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः; निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः; यो निर्गच्छत्येकशिरोभुजः स वीजकः; यस्तु परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघः; इति चतुर्विधो भवतीत्येके भाषन्ते । तत्तु न सम्यक्; कस्मात्? स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्र(ति)पद्यते तदा सङ्ख्या हीयते ॥ ४ ॥**

तस्य चातुर्विध्यमाह,—तत इत्यादि । तत असम्यगागमनात् । तान् प्रकारान् प्रकटयन्नाह,—तत्रोर्ध्ववाहुशिर इत्यादि । कायसङ्गी निरुद्धकाय । एकशिरोभुज इति एको भुज शिरसा सह यस्य निर्गच्छतीत्यर्थ । परिघ इवेति परिघोऽर्गलादण्डः ॥४॥

१ 'विध्येत्त्यजेत वा' इति पाठान्तरम् ।
२ 'व्यापादयति' इति पा० ।

१ मूढगर्भ—डिफिकल्ट लेबर—( Difficult labour ).
२ 'बन्धनान्नाभिनाडीबन्धात्' इति दाराणचन्द्र' ।
३ 'विमार्गवर्ती' इति पा० ।
४ कीलक—व्हर्टेक्स ( Vertex ).
५ प्रतिखुर—हॅन्ड्स् ॲंड फीट ( Hands and feet ).
६ बीजक—( Head with both hands ).
७ परिघ—ट्रान्स्वर्स ( Transverse ).

**तत्र, कश्चिद्द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते; कश्चिदाभुग्नैकसक्थिरेकेन, कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यगागतः; कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते; अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना; कश्चिदाभुग्नशिरा बाहुद्वयेन; कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः, कश्चिदेकेन सक्थ्ना योनिमुखं प्रतिपद्यतेऽपरेण पायुम्; इत्यष्टविधा मूढगर्भगतिरुद्दिष्टा समासेन ॥ ५ ॥**

तानेवानेकप्रकारान् दर्शयन्नाह,—तत्रेत्यादि । आभुग्नं सङ्कुचितम् । एकेन सक्थ्ना योनिमुख प्रतिपद्यत इति सबन्धनीयम् । आभुग्नं सक्थिशरीर यस्येत्यर्थः । योनिमुखं प्रतिपद्यत इत्यत्रापि सबन्धनीयम् । पिधाय आच्छाद्य । अन्तःपार्श्वापवृत्तशिरा पार्श्वमध्यनिक्षिप्तशिराः । एकेन बाहुना योनिमुखं प्रतिपद्यत इति संबन्धनीयम् । कश्चिदित्यादि अत्रापि योनिमुख प्रतिपद्यत इति सबन्धनीयम् । कश्चिदाभुग्नमध्य इत्यादि योनिमुखं प्रतिपद्यत इत्यत्रापि सबन्धनीयम् । अष्टविधा समासेन, विस्तरेण तु तिर्यग्ग्रीवाजङ्घाप्रकारेणानन्ता ॥ ५ ॥

**तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ, शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कल्लश्वासकासभ्रमनिपीडितान् परिहरेत् ॥ ६ ॥**

तेष्वसाध्यान्निर्दिशन्नाह,—तत्रेत्यादि । द्वावन्त्यौ सप्तमाष्टमावसाध्यौ स्वभावेनैव । अन्येष्वप्यवस्थयाऽसाध्यत्वं दर्शयन्नाह,—शेषानपीत्यादि । विपरीतेन्द्रियार्थादिभिः पीडिता जननी यैर्मूढगर्भैस्ते तथाविधास्तान् । विपरीतेन्द्रियार्था रूपाद्यर्थग्रहणभ्रान्ताः । योनिभ्रंशो योनिबहिर्गमनम् । योनिसवरण योनिसङ्कोचः । प्रसूताया वायुरसृगारोध्य वस्तिशिरःप्रभृतिषु शूलं करोति स मक्कल्लः । भ्रमश्चक्राधिरूढस्येव भ्रमणम् ॥ ६ ॥

**भवन्ति चात्र ।**

**कालस्य परिणामेन मुक्तं वृन्ताद्यथा फलम् ॥**
**प्रपद्यते स्वभावेन नान्यथा पतितुं ध्रुवम् ॥ ७ ॥**
**एवं कालप्रकर्षेण मुक्तो नाडीवि(नि)बन्धनात् ॥**
**गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते ॥ ८ ॥**

स्वभावप्रजननकाले यथा मूढगर्भो न भवति तथा श्लोकद्वयेन दर्शयन्नाह,—कालस्येत्यादि । यथा कालस्य परिणामेन कालकृतपरिपाकेन वृन्तान्मुक्तं फलं स्वभावेन पतितुं प्रपद्यते पतन प्राप्नोति, अन्यथा कालपरिपाकाभावेन पतितु न प्रपद्यते पतनं न प्राप्नोति । एवं कालप्रकर्षेण नाडीविबन्धनान्मुक्तो यो गर्भाशयस्थो गर्भः स जननाय प्रपद्यते जन्म प्राप्नोतीत्यर्थः ॥ ७ ॥ ८ ॥

**कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् ॥**
**पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः ॥ ९ ॥**

मूढगर्भो यथा भवति तथा दर्शयन्नाह,—कृमिवाताभिघातैरित्यादि । गर्भविच्युतिर्द्विविधा द्रवस्य स्रावरूपेण, घनावयवस्य पातरूपेण । तत्र द्रवस्य स्रवणे मूढगर्भनाम नास्ति, त्रिगुणानिलसमोहानिर्गमलक्षणस्याभावात् ॥ ९ ॥

**आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविच्युतिः ॥**
**ततः स्थिर(त)शरीरस्य पातः पञ्चमषष्ठयोः ॥ १० ॥**

परतस्त्वस्तीति दर्शयन्नाह,—आचतुर्थादित्यादि । गर्भविच्युति गर्भविमुक्तिः प्रस्रवेत् स्रावरूपा भवेत् । एतेन मासचतुष्टयं यावन्मूढगर्भता नास्तीत्युक्तम् । तत इत्यादि । ततश्चतुर्थमासादूर्ध्वं स्थिर(त)शरीरस्य विच्युतिः पातः पातरूपा भवेत् । एतेन विच्युतिरियं न स्रावरूपा, तस्माच्चतुर्थमासानन्तरं घनावयववान्मूढगर्भो भवतीत्युक्तम् ॥ १० ॥

**प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा ॥**
**नीलोद्धतसिरा हन्ति सा गर्भं स च तां तथा ११**

असाध्यमूढगर्भगर्भिण्योर्लक्षणं दर्शयन्नाह—प्रविध्यतीत्यादि । प्रविध्यति ताडयति अतिशयेन धुनोतीत्यर्थः । अन्ये 'अपविद्धशिरा' इति पठन्ति; तत्रावनतशीर्षेत्यर्थः । या स्त्री निरपत्रपा लज्जारहिता, नीलोद्धतसिरा कृष्णोद्धतसिरा, सा गर्भं स च ता तथेति सा स्त्री गर्भ हन्ति, स च गर्भवर्ती स्त्री हन्तीत्यर्थः । तथा अनेन प्रकारेण ॥ ११ ॥

**गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ॥**
**भवत्युच्छ्वासपूतित्वं शूलं[2] चान्तर्मृते शिशौ ॥ १२ ॥**
**मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ॥**
**गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः १३**

गर्भिणीरक्षार्थमन्तर्मृतस्य गर्भस्यापकर्षणाय लक्षणं तद्दर्शन्नाह,—गर्भास्पन्दनमित्यादि । आवी प्रसववेदना, अथवा आवीशब्देन योनेर्मूत्रकफप्रसेकादीन्यावीलिङ्गान्युच्यन्ते ॥ १२ ॥ १३ ॥

**वस्तिमार[3]विपन्नायाः कुक्षिः प्रस्पन्दते यदि ॥**
**तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक् १४**

**इति सुश्रुतसंहितायां निदानस्थाने मूढगर्भनिदानं नामाष्टमोऽध्यायः ॥ ८ ॥**

१ 'गर्भविद्रव' इति पा० ।
२ 'शूनताऽन्तर्मृते' इति पा० ।
३ वाग्भटे त्वय श्लोकोऽन्यथा पठ्यते, यथा,—"वस्तिद्वारे विपन्नायाः कुक्षि प्रस्पन्दते यदि । जन्मकाले ततः शीघ्र पाटयित्वोद्धरेच्छिशुम्"—इति । "गर्भिण्या मृताया यदि कुक्षिः प्रस्पन्दतेऽत्यन्त चलति, क्व प्रदेशे? वस्तिद्वारे, कदा? जन्मकाले गर्भप्रसवोन्मुखे काले, तदा कुशलो वैद्य शीघ्र कुक्षिप्रस्पन्दनादनन्तर पाटयित्वा शिशु बालकमुद्धरेत्" इत्यरुणदत्तटीका । ह्राराणचन्द्रस्तु 'वस्तिद्वारे विपन्नायाः' इति पठित्वा 'जन्मकाले उपस्थिते प्रसवकाले विपन्नाया मृताया यदि कुक्षि प्रस्पन्दते, तर्हि तत्क्षणात् वस्तिद्वारे वस्तिं द्वार च पाटयित्वा भिषक् त गर्भमुद्धरेत्' इति व्याख्यानयति ।

मातुर्मृताया अपि जीवतो गर्भस्यापकर्षणं दर्शयन्नाह,—वस्तमारेत्यादि । वस्तमारश्छगलवन्मरणम् । एतेन ग्रीवामोटनेनाशुतममक्लिष्टं मरणमुक्तं, तेन विपन्नाया मृतायाः स्त्रिय इत्यर्थः । अयमभिप्राय.—यथा वस्तं निरुच्छ्वास कृत्वा याज्ञिका मारयन्ति एवं या मृता तस्या इत्यर्थ । तत्क्षणाद्घटिकाद्वयमध्ये, परतस्तु गर्भोऽपि म्रियत इति भावः । अन्ये तत्क्षणादित्यत्र मुहूर्तादिति पठन्ति, तत्रापि स एवार्थः । जन्मकाले नवममासादिकाल इत्यर्थ । तं गर्भम् । पाटयित्वा स्त्रीकुक्षिं विदार्य । अत्र केचित्—"यदा सोऽन्तर्मृतो गर्भो शूनो वस्तिरिवाततः । तेनावृताया नार्यास्तु कुक्षिरानह्यते भृशम् । उत्क्षिप्यन्त इवाङ्गानि मूत्रवस्तिश्च भिद्यते ॥ क्लोम प्लीहा यकृच्चैव फुफ्फुसं हृदय तथा । गर्भेण पीडितं ह्येतदूर्ध्वं प्रक्रामति स्त्रिया ॥ सा शूयते मुह्यति च कृच्छ्रोच्छ्वासा च जायते । पूतिगन्धस्तथा स्वेदो जिह्वा तालु च शुष्यति ॥ वेपते भ्राम्यति तथा जीवितं चोपरुध्यते । एतैर्लिङ्गैर्विजानीयान्मृत गर्भं चिकित्सक."—इति पठन्ति, तन्न पठनीयं पुनरुक्तत्वात्, जेज्जटादिभि परिहृतत्वाच्च । श्रीब्रह्मदेवेन तु किंचिद्व्याख्यातं, तेन त्वार्षानार्षचिन्ता न कृता ॥ १४ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

**अथातो विद्रधीनां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**सर्वामरगुरुः श्रीमान्निमित्तान्तरभूमिपः ॥**
**शिष्यायोवाच निखिलमिदं विद्रधिलक्षणम् ॥ ३ ॥**

सर्वामरगुरुरिदं निखिलं विद्रधीलक्षणं शिष्यार्थमुवाचेति संबन्ध । अमृतदानेन सर्वे देवा अमरा. कृता, तेनासौ धन्वन्तरि. सर्वेषा देवाना गुरुरित्यर्थ । श्रीमान् ज्ञानातिशयैनैश्वर्येण च युक्त इत्यर्थ. । निमित्तान्तरभूमिप इति निमित्तान्तरेण कारणान्तरेण नरेष्वपि भैषज्यामृतप्रदानलक्षणेन भूपालता गत इत्यर्थ । अन्ये तु अपुत्रस्य काशिराजस्य परमाराधनया निर्वाणे[१] चित्तमधिष्ठाय पुत्रत्वमापन्न इति कारणान्तर व्याख्यानयन्ति । शिष्यायोवाच शिष्यार्थं कथितवानित्यर्थ । निखिलं समस्तम् । इदं वक्ष्यमाणम् । अनेन धन्वन्तरिस्वरूपोपवर्णनेन विद्रधेर्गरीयस्त्वं ख्यापितं भवति ॥ ३ ॥

**त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ॥**
**दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ ४ ॥**

**महामूलं रुजावन्तं वृत्तं चाप्यथवाऽऽयतम् ॥**
**तमाहुर्विद्रधिं[१] धीरा विज्ञेयः स च षड्विधः ॥ ५ ॥**
**पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ॥**
**षण्णामपि हि तेषां तु लक्षणं संप्रवक्ष्यते ॥ ६ ॥**

संप्राप्तिं सामान्यलक्षणं च दर्शयन्नाह,—त्वग्रक्तेत्यादि । भृशमित्यतिशयेनोच्छ्रिता इति सवन्ध. । धीरा धीमन्तः । एतेन सप्राप्तिरुक्ता । महामूलमित्यादि सामान्यलक्षणमुक्तं, विशिष्टं कृष्णोऽरुण इत्यादि, कारणं तु सामान्यं शोफकारणाभिधानेनैवोक्तम् । संख्यामाह,—विज्ञेयः स च षड्विध इति । तदेव षड्विधत्वमाह,—पृथगित्यादि । समस्तैश्चेत्येक., क्षतेनाप्येकः, असृजाऽप्येक इति पद ॥ ४—६ ॥

**कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः ॥**
**चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥ ७ ॥**

वातविद्रधिलक्षणमाह,—कृष्ण इत्यादि । चित्रोत्थानप्रपाक इति नानाप्रकोपपाकश्चेत्यर्थ[२] ॥ ७ ॥

**पक्वोदुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ॥**
**क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥ ८ ॥**

पित्तविद्रधिमाह,—पक्वेत्यादि ॥ ८ ॥

**शरावसदृशः पाण्डुः शीतः स्तब्धोऽल्पवेदनः ॥**
**चिरोत्थानप्रपाकश्च सकण्डुश्च कफोत्थितः ॥ ९ ॥**

कफजमाह,—शरावसदृश इत्यादि । शरावसादृश्येन महत्त्वमुक्तम् ॥ ९ ॥

**तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ॥**

तेषां विद्रधीना यथाक्रममास्रावानाह,—तन्वित्यादि । एषां वातपित्तकफोत्थाना विद्रधीनाम् ॥—

**नानावर्णरुजास्रावो घाटालो विषमो महान् ॥ १० ॥**
**विषमं पच्यते चापि विद्रधिः सान्निपातिकः ॥**

सान्निपातिकमाह,—नानेत्यादि । नानावर्णा कृष्णपीतशुक्ला., नानारुजास्तोददाहकण्ड्वाद्याः, नानास्रावास्तनुपीतशुक्ला., ते यस्य सन्ति स यथोक्त । घाटाल इति ऊर्ध्वभागो महान् यस्यास्तीति स घाटाल. । विषमोऽसाध्यत्वात् । विषमं पच्यते चापीति चिराचिरगम्भीरोत्तानानुन्नतोन्नतभेदेन ॥ १० ॥—

**तैस्तैर्भावैरभिहते क्षते वाऽपथ्यसेविनः ॥ ११ ॥**
**क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥**
**ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ॥ १२ ॥**
**एष विद्रधिरागन्तुः पित्तविद्रधिलक्षणः ॥**

---

१ 'निर्वाणा तनूमधिष्ठाय' इति पा० ।

१ विद्रधि. युनानीवैद्यके 'दुबेला' इति नाम्ना आङ्ग्लभाषाया च 'ॲब्सेस' ( Abscess ) इति नाम्ना प्रसिद्ध. ।

२ 'नानाप्रकारोत्थानो नानाप्रकारपाकश्चेत्यर्थ.' इति पा० ।

आगन्तोः सम्प्राप्तिं दर्शयन्नाह,—तैस्तैरित्यादि । तैस्तैरिति अश्वपतनमू(मू)ढप्रहारादिभिरित्यर्थः । तेन स्रुतशोणितपिच्चितादीनां ग्रहणम् । क्षते चेत्यत्र तैस्तैर्भावैरिति तीक्ष्णप्रहारादिभिरित्यर्थः । अनेन च स्रुतशोणितानां छिन्नादीनां ग्रहणम् । क्षतोष्मा वायुविसृतो वातेन विस्तारितः । पित्तविद्रधिलक्षणो भवतीत्यध्याहारः ॥ ११ ॥ १२ ॥—

कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाकरः ॥ १३ ॥
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥

रक्तविद्रधिलक्षणमाह,—कृष्णस्फोटावृत इत्यादि ॥१३॥—

उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्वजः ॥ १४ ॥

बाह्येष्वसाध्यमाह,—उक्ता विद्रधय इति । सर्वजः सान्निपातिकः ॥ १४ ॥

आभ्यन्तरानतस्तूर्ध्वं विद्रधीन् परिचक्षते ॥
गुर्वसात्म्यविरुद्धान्नशुष्कसंसृष्टभोजनात् ॥ १५ ॥
अतिव्यवायव्यायामवेगाघातविदाहिभिः ॥
पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥१६॥
वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ॥
गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ॥ १७ ॥
वृक्कयोर्यकृति प्लीह्नि हृदये क्लोम्नि वा तथा ॥
तेषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः ॥ १८ ॥
आमपक्वैषणीयाच्च पक्वापक्वं विनिर्दिशेत् ॥

अन्तर्विद्रधेर्हेतुसम्प्राप्तिलक्षणान्याह,—आभ्यन्तरानित्यादि । संसृष्टभोजनात् कदशनभोजनात् । संभूय मिलित्वा । वल्मीकवत्समुन्नद्धं विद्रधिं कुर्वन्तीति सम्बन्धः । गुल्मरूपिणं काठिन्येन । वल्मीकवत्समुन्नद्धं सर्वत उन्नतम् । गुर्वसात्म्येत्यादि विदाहिभिरिति यावत् हेतुः । पृथक् संभूय वेति सम्प्राप्तिः । गुल्मरूपिणं वल्मीकवत्समुन्नद्धमिति च सामान्यलक्षणम् । तत्रापि वल्मीकवत्समुन्नद्धत्वं पच्यमानावस्थायाम् । तेषां वातादिभेदभिन्नानां विशेषवर्णलिङ्गसंख्यादिकं बाह्यविद्रधिवज्ज्ञेयम् । जेज्झटाचार्यस्तु आभ्यन्तरस्यागन्तोरभावमेव मन्यते । तेषां बाह्यानामाभ्यन्तराणां च स्थानमाह,—गुदे इत्यादि । गुदादिषु स्थानेषु दोषा विद्रधिं कुर्वन्तीति सम्बन्धः । वस्तिमुखे न तु वस्तौ, तत्र मांसमेदसोरभावात् । वङ्क्षण ऊरुमूलाश्रयः 'गंडक' इति लोके । वृक्कौ मांसपिण्डद्वयं, एको वामपार्श्वस्थितः, द्वितीयो दक्षिणपार्श्वस्थितः । यकृत्कालखण्डं दक्षिणपार्श्वस्थम् । प्लीहा उदरवामपार्श्वे स्थितः । हृदयं कमलमुकुलाकारमधोमुखम् । क्लोम कालखण्डादधस्तात् स्थितं दक्षिणपार्श्वस्थं तिलकं प्रसिद्धम् । तेषामाभ्यन्तराणामित्यर्थः ॥ १५—१८ ॥—

अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः ॥ १९ ॥
गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता ॥
नाभ्यां हिक्का तथाऽऽटोपः कुक्षौ मारुतकोपनम् २०
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥
वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम् ॥२१॥
सर्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुणः ॥
श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका २२

बाह्यानामाभ्यन्तराणां चाधिष्ठानविशेषेण लक्षणं दर्शयन्नाह—अधिष्ठानेत्यादि । आटोपः सक्षोभः, पार्श्वसङ्कोचः पार्श्वोत्पाटनमिव । हृदीति हृदयोत्थे विद्रधौ सर्वाङ्गप्रग्रहादय उपद्रवा भवन्तीत्यर्थः । क्लोम्नि पिपासेत्यादि पाठान्तरं केचित् पठन्ति, तच्चाभावान्न लिखितम् ॥ १९—२२ ॥

आमो वा यदि वा पक्वो महान् वा यदि वेतरः ॥
सर्वो मर्मोत्थितश्चापि विद्रधिः कष्ट उच्यते ॥२३॥

तत्र मर्मोत्थितानां सर्वावस्थासु कष्टत्वं दर्शयन्नाह,—आम इत्यादि । यदि वेतर इति इतरोऽल्पः ॥ २३ ॥

नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः ॥
जीवत्यधो निःस्रुतेषु स्रुतेषूर्ध्वं न जीवति ॥ २४ ॥
हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः ॥
जीवेत्कदाचित् पुरुषो नेतरेषु कदाचन ॥ २५ ॥

अवस्थाविशेषादसाध्यत्वमाह—नाभेरित्यादि । नाभेरुपरिजाः प्लीहयकृत्क्लोमकुक्षिहृदयजाः, पक्वा ऊर्ध्वं यान्ति स्रवन्ति । इतरे गुदवस्तिवृक्कवङ्क्षणजा अधो यान्ति । एषु चाधोनिःस्रुतेषु जीवति नोर्ध्वनिःस्रुतेषु । हृन्नाभिवस्तिजान् वर्जयित्वा येऽन्ये गुदकुक्षिवङ्क्षणवृक्कप्लीहयकृत्क्लोमजास्तेष्वन्तर्विद्रधिषु बाह्यतो भिन्नेषु कदाचिद्दैववशाज्जीवेत्, न पुनरितरेष्वन्तर्भिन्नेष्वित्यर्थः । हृन्नाभिवस्तिजानां चासाध्यत्वमग्रे वाच्यम् ॥ २४ ॥ २५ ॥

स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः ॥
दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥ २६ ॥

आभ्यन्तरं रक्तजं नारीणामेव दर्शयन्नाह,—स्त्रीणामित्यादि । स्त्रीणां रक्तविद्रधिर्जायत इति सम्बन्धः । किंभूतानां स्त्रीणाम्? अपप्रजातानां पतितगर्भाणां, पुनरपि किंभूतानां? प्रजातानां सम्यक्कालप्रसूतानाम् । अहितैः शीतरूक्षाहारविहारैः ॥ २६ ॥

अपि सम्यक् प्रजातानामसृक् कायादनिःसृतम् ॥
रक्तजं विद्रधिं कुर्यात् कुक्षौ मक्कल्लसंज्ञितम् ॥२७॥
सप्ताहान्नोपशान्तश्चेत्ततोऽसौ संप्रपच्यते ॥

१ 'स्रुतशोणितपिच्चितादीनां' इति पा० ।
२ 'तीव्रदाहरुजाज्वर' इति पा० ।
३ 'संछिष्टभोजनात्' इति 'संछिन्नभोजनात्' इति च पा० ।
४ 'आमपक्वैषणीयेन' इति पा० ।
५ 'संछिष्टभोजनाद्दुष्टदेशे भोजनात्' इति पा० ।

तस्यैव रक्तविद्रधेर्विशेषमाह—अपि सम्यगित्यादि । मक्कल्लसंज्ञितं मक्कल्लजनितं, कारणे कार्योपचारात्, घृतमायुरिति यथा । सप्तरात्रमप्रशान्तः पित्तोष्मणाऽन्तः प्रपच्यते । पक्वश्चासाध्यः ॥ २७ ॥—

**विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः ॥ २८ ॥**
**गुल्मदोषसमुत्थानाद्विद्रधेर्गुल्मकस्य च ॥**
**कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च ॥२९॥**
**न निबन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः ॥**
**गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते ॥ ३० ॥**
**विवरानुचरो ग्रन्थिरप्सु बुद्बुदको यथा ॥ ३१ ॥**
**एवंप्रकारो गुल्मस्तु तस्मात्पाकं न गच्छति ॥**
**मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः ॥३२॥**
**मांसशोणितहीनत्वाद्गुल्मः पाकं न गच्छति ॥**
**गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते ॥**
**विद्रधिः पच्यते तस्माद्गुल्मश्चापि न पच्यते ॥ ३३ ॥**

पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणमित्यत्रैकरूपत्वादन्तर्विद्रधिगुल्मयो कुतो गुल्मादस्य विद्रधे· पाककृतो विशेष इत्याह–विशेषमित्यादि । विशेषं भेदम् । समुत्थानं कारणं, दोषा एव समुत्थानं तच्च द्वयोस्तुल्यम् । सिद्धान्तमाह,—न निबन्धोऽस्तीति निश्चित्य वध्नातीति निबन्धो मूलं, तद्गुल्माना मूलं नास्तीति, रसरक्तादिदूष्याणामभावत्वात् । कुत· पुनरेषा शोफरूपाणामपि मूलं नास्तीत्याह,—गुल्माकारा गुल्मरूपा, स्वयमात्मनैव, दोषा वातादय, न पुनर्दूष्यसश्रया । विद्रधेर्मूलसभवे हेतुमाह,—विद्रधिर्मासशोणिते इति, 'भवति' इति शेष । तत्र कथं पित्ते कफे वा द्रवे वातजनितस्य गुल्मस्य स्थितिरित्याह,—विवरानुचर इत्यादि । यथाऽप्सु बुद्बुदक, एवप्रकारो विवरानुचर स्रोतोऽनुसा(चा)री वातग्रन्थिरूपो गुल्म 'कफपित्तयो' इति शेष । तस्मात् पूर्वोक्ताद्धेतो पाकं न याति । अमुमेवार्थं नियमयन्नाह,—मासशोणितबाहुल्यादित्यादि । विद्रधिगुल्मयोर्मूलसभवासभवाभ्या पाकापाकौ प्रतिपाद्य स्थानविशेषादपि हेतो पाकापाकौ प्रतिपादयन्नाह,—गुल्मस्तिष्ठतीत्यादि । गुल्मश्चापि न पच्यत इति अपिशब्देन पच्यते गुल्म इति कायचिकित्सायामुक्तं गुल्मपाकित्वं समुच्चीयते ॥ २८—३३ ॥

**हृन्नाभिबस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः ॥**

हृदित्यादि । एतेन सान्निपातिक पक्वो यत्र कुत्रचित् स्थितो विद्रधिर्वर्जनीय । केचिद्गुल्मविद्रध्योर्मानकथनाय श्लोकं पठन्ति,–"मुष्टिप्रमाणो गुल्मस्तु विद्रधिश्च तत परम्"–इति, तत परमिति मुष्टेरधिक इत्यर्थं. ॥—

**अथ मज्जपरीपाको घोरः समुपजायते ॥ ३४ ॥**
**सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा ॥**
**ततः स व्याधिना तेन ज्वलनेनेव दह्यते ॥ ३५ ॥**
**अस्थिमज्जोष्मणा तेन शीर्यते दह्यमानवत् ॥**
**विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम् ॥ ३६ ॥**
**अथास्य कर्मणा व्याधिर्द्वारं तु लभते यदा ॥**
**ततो मेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु ॥ ३७ ॥**
**भिन्नेऽस्थ्नि निःस्रवेत् पूयमेतदस्थिगतं विदुः ॥**
**विद्रधिं शास्त्रकुशलाः सर्वदोषरुजावहम् ॥ ३८ ॥**

इति सुश्रुतसंहितायां निदानस्थाने विद्रधिनिदानं नाम नवमोऽध्यायः ॥ ९ ॥

प्राक्तनकर्मवशादुपेक्षणाद्वा यो विद्रधिरस्थ्यन्तर्गत पाको भवति तस्य लक्षणमाह,—अथेत्यादि । सर्वविद्रधयो वातादिना यदाऽस्थ्याश्रिता जायन्ते उपेक्षणादनन्तर तद्गतमज्जा च परिपच्यते तदेतद्रूपमुक्तम् । सोऽस्थिमासानिरोधेनेति स मज्जपरिपाक । तत स व्याधिना तेनेति तदा स पुरुष, तेन व्याधिना मज्जपरिपाकेन । अस्थिमज्जोष्मणा तेन शीर्यते दह्यमानवदिति तेन मज्जोष्मणा, अथ उपेक्षणादनन्तर, शीर्यते विनश्यति, किंवत्? दह्यमानवत् । अथास्य कर्मणेति कर्मणा शस्त्रकर्मणा । व्याधि पूयादि· ॥ ३४—३८ ॥

इति श्रीडल्हणविरचिताया निबन्धसग्रहाख्याया सुश्रुतव्याख्याया निदानस्थाने नवमोऽध्याय· ॥ ९ ॥

---

## दशमोऽध्यायः ।

**अथातो विसर्पनाडीस्तनरोगनिदानं व्याख्यास्यामः ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**त्वङ्मांसशोणितगताः कुपितास्तु दोषाः**
**सर्वाङ्गसारिणमिहास्थितमात्मलिङ्गम् ॥**
**कुर्वन्ति विस्तृतमनुन्नतमाशु शोफं[2]**
**तं सर्वतो विसरणाच्च विसर्पमाहुः[3] ॥ ३ ॥**

इदानीं सम्प्राप्तिहेतुस्वरूपनिरुक्तीराह,—त्वङ्मांसेत्यादि । त्वङ्मासशोणितगता कुपिता दोषा· शोफं कुर्वन्तीति सबन्ध· । किंभूतं शोफं? सर्वाङ्गसारिणम् । इह अस्मिन् शास्त्रे, तं विसर्पमाहुरिति सबन्ध । पुनरपि किंभूतं? अस्थितमनवस्थितं, देशाद्देशान्तरगमनात्, अन्ये तु आस्थित प्राप्तं, किं तत्?

---

१ 'पूय" इति पा० ।

२ 'विसृतमुन्नतमाशु' इति हाराणचन्द्र पठति, 'विसृत विस्तीर्णं, उन्नत महान्त' इति च व्याख्यानयति ।

३ विसर्प युनानीवैद्यके 'हुमरा' इति नाम्ना आङ्ग्लभाषायां च 'इरिसिपेलस्' (Erysipelas) इति नाम्ना प्रसिद्ध· ।

आरमलिङ्गं, एतेन वातादिदोषलिङ्गं प्राप्तमित्यर्थः[1]; अन्ये तु इहास्थितं क्वचिदेवावयवे स्थितमिति व्याख्यानयन्ति । विसृतं विस्तीर्णं, अनुन्नतं तनुत्वात्[2] शोफस्य । विसरणाच्चेति चकारात् नानाप्रकारं विसर्पतीत्यर्थं[3] समुच्चीयते । त्वङ्मांसशोणितगता इति सम्प्राप्तिः । कुपिता दोषा इति हेतुः । सर्वाङ्गसारिणमित्यादि स्वरूपम् । सर्वतो विसरणाच्चेति निरुक्तिः ॥ ३ ॥

**वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द-**
**संभेदतोदपवनज्वरलिङ्गयुक्तः ॥**
**गण्डैर्यदा तु विषमैरतिदूषितत्वा-**
**द्युक्तः स एव कथितः खलु वर्जनीयः ॥ ४ ॥**

तेषां दोषभेदेन विशिष्टं लक्षणं दर्शयन्नाह,—वातात्मक इत्यादि । असितः कृष्णः । अङ्गमर्दो वेदनाविशेषः । इदं शुद्धवातविसर्पलक्षणमुक्तम् । गण्डैरित्यादि । गण्डैरग्निदग्धसदृशैः स्फोटैर्युक्त इति सम्बन्धः । अतिदूषितत्वात् । काभ्यां? वातपित्ताभ्याम् । इदं पित्तानुगतवातविसर्पलक्षणमुक्तम् । अपरे तु सकलेनापि श्लोकेन शुद्धवातविसर्पलक्षणमाहुः, तन्मतेऽतिदूषितत्वं वातेनैवेति बोद्धव्यम् ॥ ४ ॥

**पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-**
**स्फोटप्रभेदबहुलः क्षतजप्रकाशः ॥**
**दोषप्रवृद्धिहतमांससिरो यदा स्यात्**
**स्रोतोजकर्दमनिभो न तदा स सिध्येत् ॥ ५ ॥**

पित्तात्मक इत्यादि । ज्वरादिभिः प्रभेदान्तैर्बहुलशब्दः प्रत्येकं संबध्यते । क्षतजप्रकाश इति रक्तमिव यः प्रकाशत इत्यर्थः । पूर्वार्धेन केवलपित्तारब्धो विसर्प उक्तः । दोषप्रवृद्धीत्यादि दोषप्रवृद्ध्या पित्तकफवृद्ध्या हतं मांसं सिराश्च यस्मिन् स तथा । स्रोतोजकर्दमनिभ इति अञ्जनसदृशकर्दमद्रव्यतुल्यः । अनेनोत्तरार्धेन कफपित्तात्मको विसर्प उक्तः ॥ ५ ॥

**श्लेष्मात्मकः सरति मन्दमशीघ्रपाकः**
**स्निग्धः सितश्वयथुरल्परुगुग्रकण्डुः ॥**

श्लेष्मात्मक इत्यादि । सरति विसर्पति । कफवाताभ्यां ग्रन्थिविसर्पः, स असाध्य एव । स पुरस्तादेव ग्रन्थिनिर्देशे (?) इति नात्र निर्दिष्टः, अत्रैव वातकफविसर्पलिङ्गेन निर्दिष्टेनावरुध्यत इत्यन्ये ॥—

**सर्वात्मकस्त्रिविधवर्णरुजोऽवगाढः(ढं)**
**पक्वो न सिध्यति च मांससिराप्रणाशात्[4] ॥ ६ ॥**

सान्निपातिकं दर्शयन्नाह,—सर्वात्मक इत्यादि । त्रिविधवर्णरुज इति प्रत्येकं वातादिदोषनिर्दिष्टकृष्णपीतसितादिवर्णः, वातादिदोषजनितविसर्पनिर्दिष्टतोददाहकण्ड्वादिवेदनः । अवगाढोऽभ्यन्तरमूलः । प्रणाशे शटनं, मांससिराप्रणाशात्परतो न सिध्यति मांससिराप्रणाशात् पूर्वं कृच्छ्रतः सिध्यति ॥ ६ ॥

**सद्यःक्षतव्रणमुपेत्य नरस्य पित्तं**
**रक्तं च दोषबहुलस्य करोति शोफम् ॥**
**श्यावं सलोहितमतिज्वरदाहपाकं**
**स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम्[1] ॥ ७ ॥**

सद्य इत्यादि । दोषबहुलस्य पित्तं रक्तं च शोफं करोतीति संबन्धः । किं कृत्वा? सद्यःक्षतव्रणमुपेत्य प्राप्य । किंभूतं शोफं? श्यावमित्यादिविशेषणविशिष्टम् । दोषबहुलस्येति कुष्ठवातरक्तादिपूर्वरूपदोषदूषितधातोः, तदुक्तं तयोः पूर्वरूपे 'क्षतविसर्पणम्'[2] इति, अन्ये तु त्रिदोषबहुलस्येत्यर्थमाहुः । कीर्णं व्याप्तम् ॥ ७ ॥

**सिध्यन्ति वातकफपित्तकृता विसर्पाः**
**सर्वात्मकः क्षतकृतश्च न सिद्धिमेति ॥**
**पैत्तानिलावपि च दर्शितपूर्वलिङ्गौ**
**सर्वे च मर्मसु भवन्ति हि कृच्छ्रसाध्याः ॥ ८ ॥**

तेषां साध्यासाध्यत्वमाह,—सिध्यन्तीत्यादि । न सिद्धिमेति न साध्यता याति । दर्शितपूर्वलिङ्गा इति गण्डयुक्तो वातविसर्पः, स्रोतोजकर्दमनिभः पित्तविसर्प इति । अन्ये तु 'पित्तात्मकोऽञ्जनवपुश्च तथा न सिध्येत्' इति पठन्ति, चकारेण गण्डैर्यदाऽतिविषमैरित्येवंविशिष्टो वातिकोऽप्यसाध्य इति समुच्चीयत इति व्याख्यानयन्ति । गण्डैर्यदा तु विषमैरित्यादिना वातजस्य, स्रोतोजकर्दमनिभैरित्यादिना पित्तजस्यासाध्यत्वमुक्तं यत् पुनरुच्यते तत् क्षतजस्यासाध्यताप्रसङ्गेन, प्रसङ्गोक्तं च न पौनरुक्त्यमर्हति ॥ ८ ॥

**शोफं न पक्वमिति[3] पक्वमुपेक्षते यो**
**यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ॥**
**अभ्यन्तरं प्रविशति प्रविदार्य तस्य**
**स्थानानि पूर्वविहितानि ततः स पूयः ॥ ९ ॥**
**तस्यातिमात्रगमनाद्गतिरित्यतश्च**
**नाडीव यद्वहति तेन मता तु नाडी[4] ॥**

नाडीं निर्दिशन्नाह,—शोफमित्यादि । व्रणमित्यत्रोपेक्षत इति संबन्धः । असाधुवृत्तोऽहिताहाराचारः । स्थानानि त्वगादीनि

---

१ 'वातादिशोथलिङ्ग' इति पा० ।
२ 'तनुत्व' इति पा० ।
३ 'सर्पतीति' इति पा० ।
४ 'मांससिराप्रशातात्' इति पा०

१ 'प्रशात' इति पा० ।
२ 'क्षतविसर्प–ट्रामॅटिक एरिसिपेलस' (Traumatic erysipelsa)
३ 'शोफो न पक्व इति' इति पा० ।
४ नाडीव्रण युनानीवैद्यके 'नासूर' इति नाम्ना आङ्ग्लभाषायां च 'साइनस' (Sinus) इति फिस्चुला (Fistuea) इति च नाम्ना प्रसिद्धः ।

व्रणवास्तुशब्दाभिहितानि । तस्य पूयस्य । अतश्चेति चकारो नाडीनिरुक्तिपक्षान्तरसमुच्चये । तामेव नाडीनिरुक्तिमाह,—नाडीव यद्वहति तेन मता तु नाडी, येन हेतुना नाडीवत् प्रणालीवद्वहति याति तेन हेतुना नाडीत्यर्थः । शोफ न पक्वमित्यादि हेतुः, अभ्यन्तरमित्यादिसंप्राप्तिः, नाडीवेत्यादि निरुक्तिः ॥ ९ ॥—

**दोषैस्त्रिभिर्भवति सा पृथगेकशश्च**
**संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ १० ॥**

संख्यां नियमयन्नाह,—दोषैरित्यादि । दोषैः पृथगिति तिस्रः, एकशश्च सन्निपतितैरन्या, अपराश्च तिस्रः । समूर्च्छितैरपि च द्विदोषसंयोगोत्थाः, अन्यथा अपिचकारौ निरर्थकौ स्याताम् । समूर्च्छितैर्मिश्रीभूतैरित्यर्थः । शल्यनिमित्ततोऽन्या अभिघातजाऽपरेत्यर्थः । गयदासाचार्यस्तु त्रिभिर्दोषैः पृथक् तिस्रः, एकत्र समूर्च्छितैरन्या सान्निपातिकी, शल्यनिमित्ता च पञ्चमीति पञ्चैव नाड्य इति व्याख्यानयति ॥ १० ॥

**तत्रानिलात्परुपसूक्ष्ममुखी सशूला**
**फेनानुविद्धमधिकं स्रवति क्षपायाम् ॥**

तेषां वातादीनां प्रत्येकं विशिष्टं लक्षणमाह,—तत्रानिलादित्यादि । फेनानुविद्धं फेनमिश्रम् ॥—

**तृड्तापतोदसदनज्वरभेदहेतुः**
**पीतं स्रवत्यधिकमुष्णमहःसु पित्तात् ॥ ११ ॥**

तृड्तापेत्यादि । तृड्तापादीनां हेतुः, तृषादीन् करोतीत्यर्थः ॥ ११ ॥

**ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा**
**रात्रिस्रुतिः स्तिमितरुक्कठिना सकण्डूः ॥**

ज्ञेया कफादित्यादि । बहुघनार्जुनपिच्छिलास्रेति विपुलसान्द्रधवलपिच्छिलस्रावेत्यर्थः । अत्रास्रशब्दः स्रावचाची चिन्त्य एव । अन्ये तु 'कफाद्बहुघनार्जुनपिच्छिलस्रुत्' इति पठन्ति, तत्र स्रुत् स्राव इत्यर्थः । स्तिमितरुगिति मन्दवेदनेत्यर्थः ॥—

**दोषद्वयाभिहितलक्षणदर्शनेन**
**तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥ १२ ॥**

द्वन्द्वजा आह,—दोषद्वयाभिहितेत्यादि । व्यतिकरप्रभवा द्वन्द्वजा, वातपित्तजा पित्तकफजा वातकफजा चेति तिस्रः । गयदासाचार्यस्तु दोषद्वयाभिहितेत्यादि द्वन्द्वजानां लक्षणं न पठति ॥ १२ ॥

**दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा**
**यस्यां भवन्त्यभिहितानि च लक्षणानि ॥**
**तामादिशेत् पवनपित्तकफप्रकोपा-**
**द्घोरामसुक्षयकरीमिव कालरात्रिम् ॥ १३ ॥**

सान्निपातिकीमाह,—दाहज्वरेत्यादि । असुक्षयकरी प्राणापहारिणीं, कामिव ? कालरात्रिमिव यमभगिनीमिव ॥ १३ ॥

**नष्टं कथंचिदनुमार्गमुदीरितेषु**
**स्थानेषु शल्यमचिरेण गतिं करोति ॥**
**सा फेनिलं मथितमच्छमसृग्विमिश्र-**
**मुष्णं स्रवेत सहसा सरुजा च नित्यम् ॥ १४ ॥**

शल्यनिमित्तां दर्शयन्नाह,—नष्टमित्यादि । उदीरितेषु स्थानेषु त्वगादिषु । मथितमुन्मथितमिव । उष्णमुष्णस्पर्शं; 'उष्णं करोति' इति पाठे स्रावमित्यध्याहार ॥ १४ ॥

**यावत्यो गतयो यैश्च कारणैः संभवन्ति हि ॥**
**तावन्तः स्तनरोगाः स्युः स्त्रीणां तैरेव हेतुभिः ॥ १५ ॥**

इदानीं स्तनरोगाणां संख्यां हेतुं च दर्शयन्नाह,—यावत्य इत्यादि । यावत्यो यावत्प्रमाणा गतयः, यैश्च कारणैर्वातपित्तकफसन्निपाताभिघातैः, तावन्तस्तावत्प्रमाणाः ॥ १५ ॥

**धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः ॥**
**दोषाविसरणात्तासां न भवन्ति स्तनामयाः ॥ १६ ॥**

इदानीं समानायामपि जातावसंभूतगर्भाणां ते रोगा न भवन्तीति दर्शयन्नाह,—धमन्य इत्यादि । कन्यानामसंभूतगर्भाणां स्त्रीणामित्यर्थः । अविसरणमप्रसरणम् ॥ १६ ॥

**तासामेव प्रजातानां गर्भिणीनां च ताः पुनः ॥**
**स्वभावादेव विवृता जायन्ते संभवन्त्यतः ॥ १७ ॥**

तासामेव सगर्भाणां प्रजातानां च ता एव धमन्यो विवृतद्वारा भवन्तीति दर्शयन्नाह,—तासामेवेत्यादि । प्रजातानां प्रसूतानाम् । ता इति धमन्यः । विवृताः प्रसृतद्वाराः, जायन्ते भवन्तीत्यर्थः । संभवन्तीति 'स्तनरोगा' इति शेषः ॥ १७ ॥

**रसप्रसादो मधुरः पक्वाहारनिमित्तजः ॥**
**कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥ १८ ॥**

'सक्षीरौ वाऽप्यदुग्धौ वा प्राप्य दोषाः' इति स्त्रीक्षीरस्य स्तनरोगाणां हेतुत्वेनोक्तत्वात् स्त्रीक्षीरस्यैव संभवमाह,—रसप्रसाद इत्यादि ।—रसप्रसादः रसस्य प्रसादो धाम सारस्तेज इत्यर्थः । प्राधान्यात्पक्वाहारनिमित्तशब्देन रसः कथ्यते, तेन रसज इत्यर्थः । स्तन्यनिरुक्तिमाह,—कृत्स्नदेहादित्यादि । रसधातोर्व्यानविक्षिप्तस्य सर्वदेहगतत्वात् ॥ १८ ॥

**विशस्तेष्वपि गात्रेषु यथा शुक्रं न दृश्यते ॥**
**सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ १९ ॥**

---

१ [illegible] इति पा० ।

१ 'अनुमानमुदीरितेषु' इति पा० ।

२ 'दोषाविसरणात्' इति हाराणचन्द्रः पठति, 'दोषाविसरणात्' स्तनान्तस्था स्तनामयारम्भकाणां दोषाणामनिर्गमनात्' इति च व्याख्यानयति ।

३ 'सर्वदेहाभिचरोऽपि रसः [illegible]' इति हाराणचन्द्रसम्मतः पाठः ।

**तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि ॥**
**शब्दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्तते ॥ २० ॥**
**सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ॥**
**आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥ २१ ॥**
**तदेवापत्यसंस्पर्शाद्दर्शनात् स्मरणादपि ॥**
**ग्रहणाच्च शरीरस्य शुक्रवत्संप्रवर्तते ॥ २२ ॥**
**स्नेहो निरन्तरस्तत्र प्रस्नवे हेतुरुच्यते ॥**

तस्य शरीराभ्यन्तरस्थस्यादृश्यस्यापि प्रसिद्धोपमानेन प्रवर्तने हेतुं दर्शयन्नाह,—विशस्तेष्वपीत्यादि । शुक्रलक्षणं 'स्तन्यमुच्यते' इति शेषः । कुत इत्याह,—यथा शुक्रं विशस्तेषु छिन्नेष्वपि गात्रेषु न दृश्यते तस्मात् । द्वितीयं हेतुमाह,—सर्वदेहाश्रितत्वादिति शुक्रवत् समस्तशरीराश्रितत्वात् । शुक्रदृष्टान्तेन स्तन्यस्याभ्यन्तरदर्शनं प्रतिपाद्य तेनैव दृष्टान्तेन सामग्रीतस्तस्य प्रवर्तनाद्बहिः प्रत्यक्षतां प्रतिपादयन्नाह,—तदेवेत्यादि । तदेव शुक्रं प्रवर्तते बहिर्निःसरति । सहर्षात् विशिष्टस्पर्शसकल्पलक्षणात् । विशिष्टस्पर्शसकल्पे हेतुचतुष्टयं दर्शयन्नाह,—इष्टयुवतेरित्यादि । इष्टयुवतिदर्शनादिहेतुचतुष्टये सहर्षे सुप्रसन्न एव मनसि भवतीति मनसोऽपि सुप्रसन्नस्य कारणत्व दर्शयन्नाह,—सुप्रसन्नमित्यादि । सुप्रसन्नमीर्ष्याद्यनभिभूतम् । एवं स्तन्यमपि स्त्रियाः प्रवर्तते, शुक्रमाहाररसयोनित्वात् प्रवर्तते स्तन्यमपि तथा, तस्मात् प्रवर्तते । ननु शुक्रमाहारयोन्यपि सहर्षात् कारणात् प्रवर्तते, अत्र च किं कारणमित्याह,—तदेवेत्यादि । तदेव स्तन्यं शुक्रवत् सप्रवर्तते । अपत्यसंस्पर्शादिकारणचतुष्टयेऽपि स्नेहो मूलकारणमिति तदेव दर्शयन्नाह,—स्नेह इत्यादि । प्रस्नवे स्तन्यस्रवणे । अत्रापि चत्वारो हेतवः, परमिष्टयुवतिस्थानेऽत्रापत्यग्रहणं, मूलहेतुहर्षस्थाने स्नेहः ॥ १९—२२ ॥—

**तत् कषायं भवेद्वातात् क्षिप्तं च प्लवतेऽम्भसि ॥२३॥**
**पित्तादम्लं सकटुकं राज्योऽम्भसि च पीतिकाः ॥**
**कफाद्धनं पिच्छिलं च जले चाप्यवसीदति ॥**
**सर्वैर्दुष्टैः सर्वलिङ्गमभिघाताच्च दुष्यति ॥ २४ ॥**

स्तन्यस्य प्रवर्तनं प्रभवं चाभिधाय प्रकृतिमभिधातुकाम परित्याज्यतया प्रथमं विकृतिं दर्शयन्नाह,—तदित्यादि । क्षिप्त चेति चकारेणानुक्तमपि तनुत्वादिक समुच्चीयते । सकटुकमीषत्तिक्तं, तिक्तेऽपि कटुशब्दस्य प्रवृत्तेः । अम्भसि चेति चकारान्नीललोहिताश्च राज्यो द्रष्टव्याः । पिच्छिलं चेति चकारेण दोषसप्लव सूच्यते । अवसीदति ब्रुडति । अभिघातात् पतनपीडनादिकात् ॥ २३ ॥ २४ ॥

**यत् क्षीरमुदके क्षिप्तमेकीभवति पाण्डुरम् ॥**
**मधुरं चाविवर्णं च प्रसन्नं तद्विनिर्दिशेत् ॥ २५ ॥**

निर्दोषस्य स्तन्यस्य लक्षणमाह,—यदित्यादि । एकीभवति एकत्वं याति मिलतीत्यर्थः । अविवर्णमीषत्पीतादिवर्ण, प्रसन्नं प्रकृतिस्थम् ॥ २५ ॥

**सक्षीरौ वाऽप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ॥**
**रक्तं मांसं च सन्दूष्य स्तनरोगाय कल्पते ॥ २६ ॥**

स्तनरोगहेतुं स्तन्यं प्रकृतिविकृतिभिरभिनिर्दिश्य स्तनरोगसंप्राप्तिं दर्शयन्नाह—सक्षीरावित्यादि । सक्षीरौ गर्भिण्याः, तस्या दोहस्यासभवात् । अदुग्धौ प्रसूतायाः, तस्या दोहस्य सभवात् । तत्र यदा दोह्यावदुग्धौ भवतः, तदा क्षीरभरपीडिता दोषाः कुपिता स्तनरोगाय जायन्ते । स्तनरोगाय कल्पते स्तनरोगार्थे समर्थो भवति ॥ २६ ॥

**पञ्चानामपि तेषां तु हित्वा शोणितविद्रधिम् ॥**
**लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २७ ॥**

**इति सुश्रुतसंहितायां निदानस्थाने विसर्पनाडीस्तनरोगनिदानं नाम दशमोऽध्यायः ॥ १० ॥**

तेषामपि सक्षेपार्थं लक्षणमतिदेशेन निर्दिशन्नाह,—पञ्चानामपीत्यादि । तेषां स्तनरोगाणां, समानानि तुल्यानि, 'भवन्ति' इत्यध्याहारः ॥ २७ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

**अथातो ग्रन्थ्यपच्यर्बुदगलगण्डानां निदानं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**वातादयो मांसमसृक् च दुष्टाः**
**सन्दूष्य मेदश्च कफानुविद्धम् ॥**
**वृत्तोन्नतं विग्रथितं तु शोफं**
**कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ ३ ॥**

तेषां हेतुसप्राप्तिलक्षणनिरुक्तीराह,—वातादय इत्यादि । वातादयो दोषा दुष्टा मांसमसृक् च सदूष्य शोफं कुर्वन्तीति सबन्ध । एतेन त्रयो ग्रन्थय उक्ताः । मेदश्च कफानुविद्धं कफसंसृष्टं वायुदूषितत्वाच्छोफं करोतीति संबन्ध । भोजेऽपि वातकर्तृत्वं मेदोग्रन्थावभिहितम् । तथा च,—"वायुर्मेदो यदा मांसे सक्षिपेदथवा त्वचि । तत्र मेदोभवो ग्रन्थिः श्यावो भवति कण्डुलः —" इत्यादि । अथ चतुर्थो ग्रन्थिः । चकारात् सिराजो ग्रन्थिः पञ्चमोऽपि ग्राह्यः । दुष्टा वृद्धिं गता इत्यर्थः । वृत्तो वर्तुलः, उन्नत उच्छ्रितः । विग्रथितोऽत्यर्थं कठिनः । वातादयो

---

१ स्तनरोग—'मॅमरी इन्फ्लमेशन' (Mammary Inflammation.)।

दुष्टा इत्यनेन हेतूपदेश, मांसमसृक् च संदूष्येति सम्प्राप्ति, वृत्तोन्नतं विग्रथितं च शोफमिति लक्षणोपदेश, अतो ग्रन्थिरिति प्रदिष्ट इति निरुक्ति ॥ ३ ॥

आयम्यते व्यथ्यत एति तोदं
प्रत्यस्यते कृत्यत एति भेदम् ॥
कृष्णोऽमृदुर्वस्तिरिवाततश्च
भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ ४ ॥

तेषां वातादिजानां प्रत्येकं विशिष्टं लक्षणमाह,—आयम्यत इत्यादि । आयम्यते वायोराकर्षणेन दीर्घ इव क्रियते, ग्रन्थिरिति शेष । व्यथ्यते विधूयते । एति गच्छति । तोदं व्यथाम् । प्रत्यस्यते क्षिप्यते । कृत्यते छिद्यते । एति भेदमिति भेदं च गच्छति । अमृदु कर्कशः । वस्तिरिवाततश्चेति मूत्राशयवद्दीर्घ । अस्रं रुधिरम् ॥ ४ ॥

दन्दह्यते धूप्यति चोषवांश्च
पापच्यते प्रज्वलतीव चापि ॥
रक्तः सपीतोऽप्यथवाऽपि पित्ता-
द्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥ ५ ॥

दन्दह्यते भृशं दह्यत इव । धूप्यति चातिमात्रमतिशयेन सन्तापं करोति । पापच्यते भृशं पच्यत इव । प्रज्वलतीव भस्मीभवतीव ॥ ५ ॥

शीतोऽविवर्णोऽल्परुजोऽतिकण्डूः
पाषाणवत्संहननोपपन्नः ॥
चिराभिवृद्धिश्च कफप्रकोपा-
द्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥ ६ ॥

अविवर्ण ईषद्विवर्ण. । पाषाणवत् पाषाण इव 'कठिन' इत्यध्याहारः । सहननोपपन्न सङ्घातान्वितो महानित्यर्थ ॥६॥

शरीरवृद्धिक्षयवृद्धिहानिः
स्निग्धो महानल्परुजोऽतिकण्डूः ॥
मेदःकृतो गच्छति चात्र भिन्ने
पिण्याकसर्पिःप्रतिमं तु मेदः ॥ ७ ॥

शरीरवृद्धिक्षयवृद्धिहानिरिति देहाप्यायनह्रासाभ्यामाप्यायनह्रासौ यस्य स तथा । गच्छति स्रवति मेद इति सबन्ध । अत्र मेदोग्रन्थौ भिन्ने सति, पिण्याकसर्पि प्रतिमं तिलकल्कस्त्यानघृतसदृशम् ॥ ७ ॥

व्यायामजातैरवलस्य तैस्तै-
राक्षिप्य वायुर्हि सिराप्रतानम् ॥
संपीड्य सङ्कोच्य विशोष्य चापि
ग्रन्थिं करोत्युन्नतमाशु वृत्तम् ॥ ८ ॥

१ 'चातिमात्र' इति पा० ।

ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो
भवेद्यदि स्यात्सरुजश्चलश्च ॥
अरुक् स एवाप्यचलो महांश्च
मर्मोत्थितश्चापि विवर्जनीयः ॥ ९ ॥

सिराजस्य ग्रन्थेः सम्प्राप्तिं दर्शयन्नाह,—व्यायामजातैरित्यादि । व्यायामजातैर्व्यायामसमूहैः । अवलस्य पुरुषस्य । सिराप्रतान सिराविस्तारम् । सिराजस्य कृच्छ्रसाध्यत्वमाह,—स तु कृच्छ्रसाध्य इत्यादि । तस्यासाध्यत्वमाह,—अरुगित्यादि । महांश्चेति चकारेण वातादिजा अप्येवंरूपा वर्जनीया । मर्मोत्थितश्चेति चकारेण अरुजोऽपि विवर्जनीय । अन्ये पुनरत्र "मांसात्मजं चार्बुदलक्षणेन तुल्यं हि दृष्टं त्वथ लक्षणज्ञै"—इति षष्ठं ग्रन्थिं पठन्ति । तन्न, जेज्जटादिभिः परिहृतत्वात् ॥ ८ ॥ ९ ॥

हन्वस्थिकक्षाक्षकबाहुसन्धि-
मन्यागलेषूपचितं तु मेदः ॥
ग्रन्थिं स्थिरं वृत्तमथायतं वा
स्निग्धं कफश्चाल्परुजं करोति ॥ १० ॥

तं ग्रन्थिभिस्त्वामलकास्थिमात्रै-
र्मत्स्याण्डजालप्रतिमैस्तथाऽन्यैः ॥
अनन्यवर्णैरुपचीयमानं
चयप्रकर्षादपचीं वदन्ति ॥ ११ ॥

कण्डूयुतास्तेऽल्परुजः प्रभिन्ना
स्रवन्ति नश्यन्ति भवन्ति चान्ये ॥
मेदःकफाभ्यां खलु रोग एष
सुदुस्तरो वर्षगणानुबन्धी ॥ १२ ॥

इदानीमपच्या संप्राप्त्यादीनाह,—हन्वस्थीत्यादि । हन्वोरस्थि हन्वस्थि, सन्धिशब्दो हन्वस्थ्यादिभिर्बाह्वन्तै प्रत्येकं सबध्यते, बाहुसन्धिशब्देन कूर्परसन्धिरुच्यते, अक्षकं कोष्ठक तस्य सन्धि, एतेन ग्रीवाध (ग्र)सन्धिरुच्यते, मन्या ग्रीवापश्चिमभागस्था धमनी । हन्वस्थीत्यादिसम्प्राप्तिः, ग्रन्थिं स्थिर वृत्तमित्यादि लक्षणम् । तं ग्रन्थिभिरित्यादि तं पूर्वोक्तं ग्रन्थिम् । अनन्यवर्णै समानवर्णै. । उपचीयमानं वर्धमानम् । चयप्रकर्षादिति उपचयातिशयादित्यर्थ । चयप्रकर्षादपचीमिति निरुक्ति । खलुशब्दोऽप्यर्थ. । तेन मेद कफौ वातादिदोषान्तरानुविद्धौ ज्ञेयौ । तथाहि भोज,—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम् । जह्वयो कण्डराः प्राप्य मत्स्याण्डसदृशान् बहून् ॥ कुर्वन्ति ग्रथितास्तेभ्य. पुन प्रकुपितोऽनिल । तान् दोषानूर्ध्वगो वक्ष कक्षामन्यागलाश्रित. ॥ नानाप्रकारान् कुरुते ग्रन्थीन् सा त्वपची स्मृता । व्यामिश्रदोषजातस्य कृच्छ्रसाध्या प्रकीर्तिता ॥

१ 'स एवाविचलः' इति पा० ।

२ 'जाले जालाकारे आधारे मत्स्याण्ड मत्स्याण्डजाल, राजदन्तादिषु द्रष्टव्य, तत्सदृशैर्मत्स्याण्डजालप्रतिमैः' इति हाराणचन्द्र. ।

तासां वातोत्तरा रूक्षा वातवेदनयाऽन्विता । क्षिप्रपाकसमुत्थाना दाहयुक्ता तु पैत्तिकी ॥ गूढा वाऽपाककठिना कफात्स्निग्धाऽल्परुक्करा । मेदोऽधिका श्लैष्मिकी च विशेषादतिमार्दवा ॥ अपची कण्ठमन्यासु कक्षावंक्षणसंधिषु । तां तु मालाकृतिं विद्यात् कण्ठहृद्धनुसन्धिषु ॥ गण्डमालां विजानीयादपचीतुल्यलक्षणाम्"—इति । चरके गण्डमाला[1] गण्डे एव पठिता "मेदःकफाच्छोणितसंचयोत्थो गण्डस्य पार्श्वे गलगण्ड एकः स्याद्गण्डमाला बहुभिश्च गण्डैर्दाहानले यूनि बलान्विते च ॥ साध्या स्मृता पीनसपार्श्वशूलकासज्वरच्छर्दियुता त्वसाध्या"—इति । अन्ये तु "मेदःकफाभ्यां पुनरेष रोग." इति पठन्ति । पुनःशब्दादधिकार्थाद्दोषान्तरसम्बन्ध स्थापितो भवतीति वदन्ति । तत्रापि स एवार्थ. । वर्षगणानुवन्धी वर्षसमूहसबन्धीत्यर्थः । एतेन दीर्घरोगित्वं सूचितम् । मेदःकफाभ्यामिति हेतूद्देशः ॥ १०—१२ ॥

गात्रप्रदेशे क्वचिदेव दोषाः
संमूर्च्छिता मांसमभिप्रदूष्य ॥
वृत्तं स्थिरं मन्दरुजं महान्त-
मनल्पमूलं चिरवृद्ध्यपाकम् ॥ १३ ॥
कुर्वन्ति मांसोपचयं तु शोफं
तदर्बुदं[2] शास्त्रविदो वदन्ति ॥

इदानीमर्बुदादीनां सम्प्राप्त्यादीनाह,—गात्रप्रदेशे इत्यादि । क्वचिदेव गात्रप्रदेशे दोषाः शोफं कुर्वन्तीति सवन्ध. । संमूर्च्छिता वृद्धिं गता· । क्वचिदेवानियतप्रदेशे न पुनरपचीवत् हन्वस्थ्यादिसंधिष्वेव । अपाकमविद्यमानपाकं, मांसोपचयं मांससघातम् । गात्रप्रदेशे क्वचिदेवेति सम्प्राप्ति. । संमूर्च्छिता दोषा इति हेतु । वृत्तं स्थिरमित्यादि स्वलक्षणम् । गयदासाचार्यस्तु 'कुर्वन्ति मांसोच्छ्रयमत्यगाधम्' इति पठति ॥ १३ ॥—

वातेन पित्तेन कफेन चापि
रक्तेन मांसेन च मेदसा[3] च ॥ १४ ॥
तज्जायते तस्य च लक्षणानि
ग्रन्थेः समानानि सदा भवन्ति ॥

तज्जायते तदर्बुदं भवतीत्यर्थ । तस्य च लक्षणानि वातपित्तकफभेदे ॥ १४ ॥—

दोषः प्रदुष्टो रुधिरं सिरास्तु
संपीड्य सङ्कोच्य गतस्तु पाकम् ॥ १५ ॥

१ 'गण्डमाला युनानीवैद्यके 'खनाज़ीर' इति नाम्ना आङ्ग्लभाषायां च 'स्क्रोफ्यूला' (Scrofula) इति 'ट्युबरकल ग्लॅन्ड्स' (Tuberclo glands) इति च नाम्ना प्रसिद्धा ॥

२ अर्बुदयुनानीवैद्यके 'सलआ' इति नाम्ना आङ्ग्लभाषाया च 'ट्यूमर' (Tumour) इति नाम्ना प्रसिद्धम् ।

३ मेदोर्बुदमाङ्ग्लभाषाया 'फॅटी ट्यूमर' (Fatty tumour) इति नाम्ना प्रसिद्धम् ।

सास्रावमुन्नह्यति मांसपिण्डं
मांसाङ्कुरैराचितमाशुवृद्धिम् ॥
स्रवत्यजस्रं रुधिरं प्रदुष्ट-
मसाध्यमेतद्रुधिरात्मकं[1] स्यात् ॥ १६ ॥
रक्तक्षयोपद्रवपीडितत्वात्
पाण्डुर्भवेदर्बुदपीडितस्तु ॥

तस्यार्बुदस्य लक्षणमाह—दोषः प्रदुष्ट इत्यादि । प्रदुष्टो दोषः सिरासु गतो रुधिर संपीड्य संकोच्य मांसपिण्डमुन्नह्यतीति संबन्धः । उन्नह्यति उद्बध्नातीव; अन्ये तु प्रदुष्टो दोष उन्नह्यति उच्छ्रितो भवति । आशुवृद्धिं शीघ्रवर्धनशीलं करोतीति व्याख्यानयन्ति । अपाकमीषत्पाकम् ॥ १५ ॥ १६ ॥—

मुष्टिप्रहारादिभिरर्दितेऽङ्गे
मांसं प्रदुष्टं प्रकरोति शोफम् ॥ १७ ॥
अवेदनं स्निग्धमनन्यवर्ण-
मपाकमश्मोपममप्रचाल्यम् ॥
प्रदुष्टमांसस्य नरस्य बाढ-
मेतद्भवेन्मांसपरायणस्य ॥ १८ ॥
मांसार्बुदं[2] त्वेतदसाध्यमुक्तं

मांसजस्य सम्प्राप्तिं दर्शयन्नाह,—मुष्टिप्रहारादिभिरित्यादि । समुपैति सम्यग्गच्छति । बाढमतिशयेन मांसपरायणस्य मांसभक्षणशीलस्य । 'मुष्टिप्रहारादिभि·' इत्यत्र केचित् 'काष्ठप्रहारादिभिः' इति पठन्ति ॥ १७ ॥ १८ ॥—

साध्येष्वपीमानि विवर्जयेत्तु ॥
संप्रस्रुतं मर्मणि यच्च जातं
स्रोतःसु वा यच्च भवेदचाल्यम् ॥ १९ ॥
यज्जायते[3]ऽन्यत् खलु पूर्वजाते
ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ॥
यद्द्वन्द्वजातं युगपत् क्रमाद्वा
द्विरर्बुदं तच्च भवेदसाध्यम् ॥ २० ॥

साध्येष्वपीत्यादि । साध्येष्वपीमानि विवर्जयेदिति साध्येषु मध्ये इमानि वक्ष्यमाणानि विवर्जयेदित्यर्थ. । अध्यर्बुदमपि द्विरर्बुदमेव, अन्ये 'अत्यर्बुदं' इति पठन्ति । यद्द्वन्द्वजातमित्यादि द्वन्द्वेन युग्मेन जातं द्वन्द्वजातं, न केवलमध्यर्बुद द्विरर्बुद यद्द्वन्द्वजातं तदपि द्विरर्बुदमित्यर्थः । भेदश्च तयोरुपरिजातत्वेन पार्श्वजातत्वेन च । एतेन द्विरर्बुदद्वितयमप्यसाध्यमुक्तम् ॥१९॥२०॥

न पाकमायान्ति कफाधिकत्वा-
न्मेदोऽधिकत्वाच्च विशेषतस्तु ॥

१ रक्तार्बुद—'कॅन्सर' ( Cancer ).

२ मांसार्बुदमाङ्ग्लभाषायां 'मायोमा' ( Myoma ) इति नाम्ना प्रसिद्धम् ।

३ 'सजायते यत्' इति पा० ।

दोषस्थिरत्वाद्ग्रथनाच्च तेषां
सर्वार्बुदान्येव निसर्गतस्तु ॥ २१ ॥

तेषां पाकाभावे हेतुं दर्शयन्नाह—न पाकमित्यादि । ग्रन्थ्यादिष्वपि कफादयश्चत्वारो हेतवः सन्ति, परमर्बुदेषु विशेषतः कफस्य मेदसश्चाधिक्यात्, तस्मात्तथा विशेषतो दोषस्थिरत्वात् दोषकार्यस्य मांसोच्छ्रयस्य तेनैव स्वरूपेण चिरकालावस्थितिशीलत्वात्, तथा ग्रथनात् ग्रन्थिरूपत्वात्तेषां मेदःप्रभृतीनां; निसर्गतस्त्विति तुशब्दोऽप्यर्थः, तेन स्वभावादप्यर्बुदा विपाकं न गच्छन्तीत्यर्थः ॥ २१ ॥

वातः कफश्चैव गले प्रवृद्धौ
मन्ये तु संसृत्य तथैव मेदः ॥
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः
समन्वितं तं गलगण्डमाहुः ॥ २२ ॥

इदानीं गलगण्डसंप्राप्तिं दर्शयन्नाह—वात इत्यादि । वातादयो गण्डं क्रमशः कुर्वन्तीति सम्बन्धः । किंविशिष्टं गण्डं[१] स्वलिङ्गैः समन्वितम् । वातेन कफेन च गलगण्डो भवति, न च पित्तेन, स्वभावेन पित्तजस्य गलगण्डस्याभावात् ॥ २२ ॥

तोदान्वितः कृष्णसिरावनद्धः
कृष्णोऽरुणो वा पवनात्मकस्तु ॥
मेदोन्वितश्चोपचितश्च काला-
द्भवेदतिस्निग्धतरोऽरुजश्च ॥ २३ ॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको
यदृच्छया पाकमियात् कदाचित् ।
वैरस्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रशोषः ॥ २४ ॥
स्थिरः सवर्णोऽल्परुग्युग्रकण्डूः
शीतो महांश्चापि कफात्मकस्तु ॥
चिराभिवृद्धिं कुरुते चिराच्च
प्रपच्यते मन्दरुजः(जं)कदाचित् ॥ २५ ॥
माधुर्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रलेपः ॥
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो
मेदःकृतो नीरुगथातिकण्डूः ॥ २६ ॥
प्रलम्बतेऽलाबुवदल्पमूलो
देहानुरूपक्षयवृद्धियुक्तः ॥
स्निग्धास्यता तस्य भवेच्च जन्तो-
र्गलेऽनु शब्दं कुरुते च नित्यम् ॥ २७ ॥

तस्यैव वातादिविशेषलिङ्गानि निर्दिशन्नाह,—तोदान्वित इत्यादि । अरुज इति सोऽपि वातगलगण्डो यदा कालात् कालेन कृत्वा मेदोऽन्वितो भवति, तदा अरुजो भवतीत्यर्थः । यदृच्छया अज्ञातहेतुनियमेन पाकमियात् गच्छेत् । कदाचित् न सर्वकालम् । वातजं कफजं चोक्त्वा मेदोजमाह,—स्निग्ध इत्यादि । गलेऽनुशब्दमनुनादं प्रतिशब्दमित्यर्थः ॥२३—२७॥

कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं
संवत्सरातीतमरोचकार्तम् ॥
क्षीणं च वैद्यो गलगण्डिनं तं
भिन्नस्वरं चैव विवर्जयेत्तु ॥ २८ ॥

इदानीं गलगण्डस्यासाध्यतामाह,—कृच्छ्रादित्यादि ॥ २८ ॥

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ॥
महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥२९॥

इति सुश्रुतसंहितायां निदानस्थाने गलगण्डगण्डमालापच्यर्बुदनिदानं नामैकादशोऽध्यायः ॥ ११ ॥

न सर्व एव गलाश्रयो गण्डो गलगण्डः, किं तर्हि कश्चिदेव वक्ष्यमाणस्वरूप इति दर्शयन्नाह—निबद्ध इत्यादि । नियमेन बद्धो निबद्धः । मुष्कवत् अण्डवत् ॥ २९ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

अथातो वृद्ध्युपदंशश्लीपदानां निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि ॥ १ ॥ २ ॥

वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयः । तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्यतमः ॥ ३ ॥

वृद्धीनां संख्यामाह,—वातेत्यादि । संख्येयनिर्देशादेव सप्तसंख्यासिद्धौ सप्तसंग्रहणं द्वन्द्वजादिवृद्धिनिषेधार्थम् । तासां पुनरसंभवो व्याधिस्वभावात् । धातुमलकृतायामपि वृद्धौ दोषस्यैव चिकित्सार्थं संभवं दर्शयन्नाह,—तासामित्यादि । वातसमुत्थे वातात् सम्यगुत्तिष्ठते वृद्धिं गच्छत इत्यर्थः । जननहेतुः पुनरन्यतम इति तं प्रतिपादयन्नाह,—केवलमुत्पत्तिहेतुरन्यतम इति । केवलं परमुत्पत्तेरुत्पादकस्य हेतोः कारणमन्यतमं मूत्रमन्त्रं वा । अन्ये तु अनयोर्वृद्ध्योर्य उत्पत्तेर्हेतुर्वायुः सोऽन्यतमो भिन्नो ज्ञेयः, एतेन मूत्रसन्धारणकुपितो वायुर्मूत्रवृद्धेः कारणं, भारहरणादिभिः कुपितस्त्वन्त्रवृद्धेः कारणमित्यर्थः ॥ ३ ॥

---

१ गलगण्ड–'गॉयटर' (Goitre)।

२ 'भवेत्प्रतिस्तब्धगलोऽरुजश्च' इति 'भवेत्प्रदिग्धे च गलेऽरुजश्च' इति च पा०।

३ 'गलेन' इति पा०।

**अधः प्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति, तां वृद्धिमित्याचक्षते ॥ ४ ॥**

तासां संप्राप्तिमाह,—अधः प्रकुपित इत्यादि। फलकोशयोरित्यनेन द्विवचनेन मुष्कद्वय एव वृद्धिरिति न ज्ञेय, किं तर्हि एकस्मिन्नपि पक्षे वृद्धिरिति ज्ञातव्यम् ॥ ४ ॥

**तासां भविष्यतीनां पूर्वरूपाणि—वस्तिकटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोशशोफश्चेति ॥५॥**

तासां पूर्वरूपमाह,—तासामित्यादि ॥ ५ ॥

**तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषामनिमित्तानिलरुजं वातवृद्धिमाचक्षते; पक्कोडुम्बरसङ्काशां ज्वरदाहोष्मवतीं चाशुसमुत्थानपाकां पित्तवृद्धिं; कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिं; कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिं, मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिं, मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति, सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रं वेदनां वृषणयोः श्वयथुं कोशयोश्चापादयति, तां मूत्रवृद्धिं विद्यात्; भारहरणबलवद्विग्रहवृक्षप्रपतनादिभिरायासविशेषैर्वायुरति(भि)प्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्यैतरस्य चैकदेशं विगुणमादायाधो गत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोशं प्रविश्य मुष्कशोफमापादयति, आध्मातो वस्तिरिवाततः प्रदीर्घः स शोफो भवति, सशब्दमवपीडितश्चोर्ध्वमुपैति, विमुक्तश्च पुनराध्मायते, तामन्त्रवृद्धिमसाध्यामित्याचक्षते ॥ ६ ॥**

१ वातजवृद्धि—'क्रोनिक ऑर्काइटिस्' (Chronic orchitis).

२ पित्तजवृद्धि—'ॲक्युट ओर्काइटिस' (Acute orchitis)

३ कफजवृद्धि—'ट्युबरकल टेस्टिझ' (Tubercle testes).

४ रक्तजवृद्धि. आङ्ग्लभाषाया 'हिमॅटोसील' (Haematocele) इति नाम्ना प्रसिद्धा।

५ मेदोजवृद्धिराङ्ग्लभाषायां 'एलिफॅन्टिॲसिस ऑफ स्क्रोटम (Elephantiasis of scrotum) इति नाम्ना प्रसिद्धा।

६ मूत्रजवृद्धि युनानीवैद्यके 'फिल्लतुल माय्' इति नाम्ना आङ्ग्ल भाषाया च 'हायड्रोसील (Hydrocele) इति नाम्ना प्रसिद्धा।

७ 'क्षुद्रान्त्रस्यैकदेशं' इति पाठान्तरम् ॥

८ विगुण संकुचित, 'द्विगुण' इति पाठान्तरम्, तत्र सङ्कोचेन द्विगुणीकृतमित्यर्थः ॥

९ 'पुनराधमति' इति पा०।

१० अन्त्रवृद्धिः युनानीवैद्यके 'फिल्लतुल अमआ' इति नाम्ना आङ्ग्लभाषायां च 'इन्ग्वायनल हर्निया' (Inguinal Hernia) इति नाम्ना प्रसिद्धा।

तासां वातादिजानां लक्षणमाह,—तत्रानिलेत्यादि। आततामाध्माताम्। मेदोवृद्धिमिति कफेन सह। मूत्रेत्यादि शीलं स्वभावः। क्षुभ्यति संचलति। आध्मातो वस्तिरिव परिपूर्णो मूत्राशय इव। आततो विस्तीर्णः। उपैति उद्गच्छति, विमुक्तश्च सशब्दमेवाध्मायते ॥ ६ ॥

**तत्रातिमैथुनादतिब्रह्मचर्याद्वा तथा (अति)ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्ष्यसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनाद्बन्धनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्ष्यसलिलप्रक्षालनादवपीडनाच्छुक्र-मूत्र-वेग-विधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति, तमुपदंशमित्याचक्षते ॥ ७ ॥**

वृद्धेरनन्तरमुपदंशाना हेत्वाद्यभिधानमाह,—तत्रातिमैथुनेत्यादि। अतिब्रह्मचारिण्या मैथुनातिनिवृत्त्या सङ्कुचितकर्कशयोनिमुखत्वात्। चिरोत्सृष्टा प्रभूतकालत्यक्ता, अत्रापि स एव हेतुः। ब्रह्मचारिण्या जन्मन प्रभृत्येव मैथुनाभाव, चिरोत्सृष्टाया कदाचिदेवेत्यनयोर्भेदः। रजस्वला दुष्टार्तवप्रसङ्गात्। दीर्घकर्कशरोमाभिगमने पीडनाभिघातप्रसङ्गात्। सकीर्णरोमां घनरोमां, निगूढरोमामभ्यन्तररोमा, अल्पद्वारायामपि स एव हेतुः। महाद्वाराया शोफहेतुश्चिन्त्य एव, तस्मात् केचिन्न पठन्ति। अप्रियाया लिङ्गानुत्थानेनेतश्चेताभिघातप्रसङ्गात्। अकामायाः सक्थिसङ्कोचनेन द्वाराल्पत्वात्। अचौक्ष्यसलिलप्रक्षालितयोनिः सलिलदोषात्, अचौक्ष्यमपवित्रम्। अप्रक्षालितयोनेः स्वेदमलदोषात्। योनिरोगोपसृष्टाया रोगदोषानुसारेण दोषोदयात्; स्वभावतो वा दुष्टयोनेर्वातादय एव कारणम्। वियोनिं हस्तजङ्घान्तरं, तस्य कर्कशत्वात्। करजा नखा, दशना दन्ता, शूकस्य शुया इति प्रसिद्धस्य सविषमलजकीटस्य, निपातनाल्लिङ्गादिशरीरे पातनादथवा तेषा मर्दनात् पीडनात्। चतुष्पद्योऽजादयो रासभ्यादयो वा, तासामप्यल्पारम्ययोनित्वात्। अचौक्ष्यसलिलप्रक्षालनादिभिरिति अचौक्ष्यसलिलप्रक्षालनमत्र लिङ्गस्य न तु योनेः ॥ ७ ॥

**स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैव ॥ ८ ॥**

१ 'अप्रक्षालनादेवविधाद्वाऽन्यस्मात्' इति पा०।

२ उपदशरोग. युनानीवैद्यके 'जुम्राह' इति नाम्ना आङ्ग्लभाषाया च 'सॉफ्ट शॅंकर' (Soft chancre) इति नाम्ना प्रसिद्ध।

३ 'सविषशूकेति शूक सजन्तुर्जलमल, लिङ्गवृद्धिकरयोगो वा' इति पा०।

४ 'चैव' इति पा०।

तेषां संख्यामाह,—स पञ्चविध इत्यादि । त्रिभिर्दोषैः पृथगिति त्रयः, समस्तैरेकः, असृजा चैकः, एवं पञ्च ॥ ८ ॥

**तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः, पैत्तिके ज्वरः श्वयथुः पक्वोडुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च, श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनाश्च; रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्चाप्यश्चैव कदाचित्, सर्वजे सर्वलिङ्गदर्शनमवदरणं च शेफसः कृमिप्रादुर्भावो मरणं चेति ॥ ९ ॥**

तेषां वातादिजानां प्रत्येकं लक्षणमाह—तत्र वातिके इत्यादि । "मेढ्रसन्धौ व्रणाः केचित् केचित् सर्वाश्रयाः स्मृताः । कुलत्थाकृतयः केचित्केचिन्मुद्गदलोपमाः ॥ रुजादाहपरीताश्च तृष्णामोहसमन्विताः । शीघ्रं केचिद्विसर्पन्ति शनैः केचित्तथाऽपरे ॥ स्त्रीणां च पुंसां जायन्ते उपदंशाः सुदारुणाः "—इति तन्त्रान्तरे ॥ ९ ॥

**कुपितास्तु दोषा वातपित्तश्लेष्माणोऽधःप्रपन्ना वङ्क्षणोरुजानुजङ्घास्ववतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति, तं श्लीपदमित्याचक्षते । तत्त्रिविधं—वातपित्तकफनिमित्तमिति ॥ १० ॥**

**तत्र, वातजं खरं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः, पित्तजं तु पीतावभासमीषन्मृदुज्वरदाहप्रायं च; श्लेष्मजं तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकं महाग्रन्थिकं कण्टकैरुपचितं च ॥ ११ ॥**

**तत्र संवत्सरातीतमतिमहद्वल्मीकजातं प्रस्रुतमिति वर्जनीयानि ॥ १२ ॥**

वल्मीकजातं वल्मीकवज्जातं, अतिबहुतरशिखरैर्ग्रन्थिभिरुपचितत्वात्, परपदार्थेषु हि प्रवृत्ता शब्दा वतिमन्तरेणापि वत्यर्थं जनयन्ति ॥ १०—१२ ॥

भवन्ति चात्र ।

**त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् ॥
गुरुत्वं च महत्त्वं च यस्मान्नास्ति विना कफात् ॥१३॥**

वातपित्तश्लीपदान्यपि कफाधिकान्येवेति दर्शयन्नाह—त्रीणीत्यादि ॥ १३ ॥

**पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ॥
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ १४ ॥**

१ श्लीपदरोग युनानीवैद्यके 'दाय् उल फील' इति नाम्ना आङ्ग्लभाषाया च 'एलिफॅन्टीएसिस' ( Elephantiasis ) इति नाम्ना प्रसिद्ध ।

देशविशेष एवास्योत्पत्तिं दर्शयन्नाह—पुराणोदकभूयिष्ठा इत्यादि । अनूपदेशस्य पुराणोदकभूयिष्ठता । जाङ्गलस्योन्नतसमभूतलत्वात्सलिलं पतितं न तिष्ठति, स्थितमपि रूक्षोष्णशुष्कत्वाद्देशस्य शोषमुपैति । तेन जाङ्गलदेशस्य शीतेऽप्यशीतता ॥ १४ ॥

**पादवद्धस्तयोश्चापि श्लीपदं जायते नृणाम् ॥
कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः ॥ १५ ॥**

श्लीपदस्य पादाभ्यामन्यस्मिन्नप्यङ्गे उत्पत्तिं दर्शयन्नाह—पादवद्धस्तयोश्चापीत्यादि ॥ १५ ॥

**इति सुश्रुतसंहितायां निदानस्थाने वृद्ध्युपदंशश्लीपदनिदानं नाम द्वादशोऽध्यायः ॥ १२ ॥**

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

**अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । यद्यपि क्षुद्ररोगेषु रोहिणीवल्मीकादयो महाव्याधयः सन्ति तथाऽपि क्षुद्ररोगाणां बहुलत्वात्तैरेव व्यपदेशः, यथा बहुषु छत्रिषु गच्छत्सु अच्छत्रिष्वपि केषुचित् छत्रिणो यान्तीति व्यपदेशः, तथाऽत्रापीति न दोषः । अन्ये तु क्षुद्राः लघवस्तिलकाद्यपेक्षया, अग्निरोहिणीवल्मीकाद्यपेक्षया क्षुद्रास्तीक्ष्णाः ; अथवा पूर्वाचार्यप्रसिद्धा निर्हेतुकेयं संज्ञा ॥१॥२

**समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा,—अजगल्लिका, यवप्रख्या, अन्धालजी, विवृता, कच्छपिका, वल्मीकं, इन्द्रवृद्धा, पनसिका, पाषाणगर्दभः, जालगर्दभः, कक्षा, विस्फोटकः, अग्निरोहिणी, चिप्पं, कुनखः, अनुशयी, विदारिका, शर्करार्बुदं, पामा, विचर्चिका, रकसा, पाददारिका, कदरं, अलसेन्द्रलुप्तौ, दारुणकः, अरुंषिका, पलितं, मसूरिका, यौवनपिडका, पद्मिनीकण्टको, जतुमणिः, मशकः, चर्मकीलः, तिलकालको, न्यच्छं, व्यङ्गः, परिवर्तिका, अवपाटिका, निरुद्धप्रकशः, संनिरुद्धगुदः, अहिपूतनं, वृषणकच्छूः, गुदभ्रंशश्चेति ॥ ३ ॥**

संख्यामाह,—समासेनेत्यादि । समासेन संक्षेपेण, विस्तरेण प्रमाणं तु नास्त्येव । श्रीब्रह्मदेवस्तु, गर्दभिकेरिवेल्लिकागन्धपि-

१ 'सूक्ष्मा' इति पा० ।
२ 'अलस , रुज्या' इति पा० ।

डिकातिलकालकाना संग्रहणेनाष्टचत्वारिंशदिति पठति । श्रीजेज्झटेन तु गर्दभिकादयश्चत्वारो न पठिताः । पूर्वव्याख्यातारोऽपि सुवीरनन्दिवाराहादयः समानतन्त्रापाठात् गर्दभिकादीना चतुर्णां पाठं गर्हितं मन्यन्ते । गयदासाचार्यस्तु समानतन्त्रादर्शनेऽपि सर्वेष्वेव पाठेषु पातात् गर्दभिकादीन् पठति, पामादींश्च क्षुद्रत्वेऽपि चतुरः कुष्ठ एव पठति ॥ ३ ॥

**स्निग्धा सवर्णा ग्रथिता नीरुजा ग्रन्थि[1]सन्निभा ॥**
**कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ ४ ॥**

तेषां प्रत्येकं लक्षणमाह,—स्निग्धेत्यादि । प्रायोग्रहणमत्र लुप्तनिर्दिष्टं द्रष्टव्यं, तेन क्वचिदबालेष्वपीत्येके मन्यन्ते ॥ ४ ॥

**यवाकारा सुकठिना ग्रथिता मांससंश्रिता ॥**
**पिडका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ ५ ॥**

यवेत्यादि । यवाकारा [2]स्थूलनिम्नमध्यान्तत्वेन यवाकारा ॥५॥

**घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् ॥**
**अन्धालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥६॥**

घनामित्यादि । अवक्त्रामिति अल्पमुखीं, परिमण्डलां वर्तुलामित्यर्थः । अन्धालजी स्नायुप्रसृतान्तर्मुखीम् ॥ ६ ॥

**विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम् ॥**
**विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ७**

विवृतास्यामित्यादि । विवृतास्यामिति व्यात्तमुखीम् ॥ ७ ॥

**ग्रन्थयः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः ॥**
**कफानिलाभ्यामुद्भूतां विद्यात्तां कच्छपीमिति ॥८॥**

दारुणा कठिना ॥ ८ ॥

**पाणिपादतले सन्धौ ग्रीवायामूर्ध्वजत्रुणि ॥**
**ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते ॥ ९ ॥**
**तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः ॥**
**व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भवः ॥ १० ॥**

ग्रन्थयश इत्यादि ॥ ९ ॥ १० ॥

**[3]पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् ॥**
**इन्द्रवृद्धां तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥११॥**
**कर्णौ परि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक् ॥**
**शालूकवत्पनसिकां तां विद्याच्छ्लेष्मवातजाम् ॥१२॥**
**हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् ॥**
**[4]पाषाणगर्दभं विद्याद्बलासपवनात्मकम् ॥ १३ ॥**
**विसर्पवत् सर्पति यो दाहज्वरकरस्तनुः ॥**
**अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्दभः ॥१४॥**

**(पिडिकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् ॥**
**सर्वात्मकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥१५॥)**
**बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् ॥**
**पित्तप्रकोपसंभूतां [1]कक्षामिति विनिर्दिशेत् ॥ १६ ॥**
**(एकामेवंविधां दृष्ट्वा पिटिकां स्फोटसन्निभाम् ॥**
**त्वग्गतां पित्तकोपेन गन्धनामां प्रचक्षते ॥ १७ ॥)**
**अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः ॥**
**क्वचित् सर्वत्र वा देहे स्मृता [2]विस्फोटका इति ॥१८॥**

पद्मेत्यादि । पद्मपुष्करं पद्मकर्णिका । गयदासाचार्यस्तु गर्दभिका पठति । यथा "मण्डला वृत्तमुत्सन्ना सरक्ता पिडकाचिताम् । रुजाकरी गर्दभिका ता विद्याद्वातपित्तजाम्" ॥११—१८ ॥

**कक्षाभागेषु ये स्फोटा जायन्ते मांसदारु(र)णाः ॥**
**अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १९ ॥**
**सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ॥**
**तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥ २० ॥**

कक्षाभागेष्वित्यादि । असाध्यामिति अत एवास्याश्चिकित्सितेषु न चिकित्साभिधानम् । मासदारणा इत्यपि पाठ । तथाहि तन्त्रान्तरम्,—"पित्तोत्कटा नृणा दोषा प्रदीप्ताङ्गारसन्निभान् । कक्षाभागेषु कुर्वन्ति तीव्रदाहरुजाज्वरान् ॥ मासावदारणान् स्फोटान् ये हन्युरनुपक्रमात् । पक्षाद्दशाहाद्वाप्यसौ सा ज्ञेया वहिरोहिणी—" इति । तत्र वाताधिकैः सप्ताहात्, पित्ताधिकैर्दशाहात्, कफाधिकैः पक्षात् ॥ १८ ॥ २० ॥

**नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम् ॥**
**करोति दाहपाकौ च तं व्याधिं [3]चिप्पमादिशेत् ॥२१॥**
**तदेव क्षतरोगाख्यं तथोपनखमित्यपि ॥**
**अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः २२**
**भवेत्तं कुनखं विद्यात् कुलीनमिति संज्ञितम् ॥**

नखेत्यादि । चिप्पमिति तन्त्रान्तरेऽङ्गुलीवेष्टकमिति प्रसिद्धम् ॥ २० ॥ २२ ॥—

**गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ॥ २३ ॥**
**कफादन्तःप्रपाकां तां विद्यादनुशयीं भिषक् ॥**

गम्भीरामित्यादि । अन्त पाकेन गम्भीराम् । अल्पसंरम्भामल्पशोथा, उपरिस्थिता मस्तके स्थिताम् ॥ २३ ॥—

**[4]विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ॥ २४ ॥**
**रक्तां विदारिकां विद्यात् सर्वजां सर्वलक्षणाम् ॥**

---

१ 'मुद्गसन्निभा' इति पा० ।
२ 'अन्तर्निम्नमध्योन्नतत्वेन' इति पा० ।
३ 'पद्मकर्णिवन्मध्ये' इति पा० ।
४ पाषाणगर्दभ आङ्ग्लभाषाया 'मम्प्स्' (Mumps) इति नाम्ना प्रसिद्धः ।

१ कक्षारोग आङ्ग्लभाषाया 'हर्पीज़ ज़ोस्टर' (Herpes zoster) इति नाम्ना प्रसिद्ध ।
२ विस्फोटक 'इम्पेटिगो' (Impetigo) ।
३ चिप्परोग आङ्ग्लभाषाया 'व्हिट्लो' (Whitlow) इति नाम्ना प्रसिद्धः ।
४ विदारिका आङ्ग्लभाषाया 'ब्यूबो' (Bubo) इति नाम्ना प्रसिद्धा ।

विदारीकन्दवदित्यादि । वङ्क्षणसन्धि गुण्डक । रक्ता लोहिता, सर्वजा सन्निपातजा; पर तथाऽपि साध्या, न हि सर्व एव सन्निपातजा व्याधयोऽसाध्याः । सर्वलक्षणा दोषसमुदायलक्षणा, न तु प्रत्येकदोषलक्षणा, दोषेभ्यो दोषसमुदायस्यान्यत्वात्, चूर्णहरिद्रासयोगस्येव । अन्ये तु सर्वेभ्यो वातपित्तकफेभ्यः पृथक् द्विशस्त्रिशो वा जायत इति सर्वजा इत्यस्याः साप्तविध्यं दोषलिङ्गैः सूक्ष्ममतिनाऽनुक्तमप्यूह्यमित्याचक्षते, तन्नेच्छति गयदासाचार्य, येन क्षुद्ररोगसामान्यन्यायेनास्या साप्तविध्यं न प्रपद्यते, न हि क्षुद्ररोगेषु कोऽपि व्याधिः पठितो यः प्रत्येकादिदोषजः, अपि च यद्याचार्यस्य साप्तविध्यमभिप्रेतं स्यात्तदा 'दोषैः सप्तविधा तु सा' इति पाठ कुर्यात्, तन्त्रान्तरे चेयं वातकफान्विता पठिता, तस्माद्वातकफाविक्येन हीनपित्ततया अस्या उत्पत्तिर्ज्ञेयेति ॥ २४ ॥—

**प्राप्य मांससिरास्नायूः(यु)श्लेष्मा मेदस्तथाऽनिलः ॥**
**ग्रन्थिं कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् ॥**
**स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः ॥ २६ ॥**
**मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः ॥**
**दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः सिराः ॥ २७ ॥**
**स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्वुदम् ॥**

प्राप्येत्यादि । इयं च शर्करासम्प्राप्तिरुक्ता, सा च शर्करा हेतु शर्करार्वुदस्य । काठिन्यादेव शर्करासादृश्येन शर्करा । अत्यगाधोच्छ्रायाभ्यामर्वुदम् । नानावर्णं मधुघृतरससन्निभम् । तत इत्यादि तत शर्करायाः सिरा रक्तं स्रवन्तीत्यर्थः । केचित् शर्करा शर्करार्वुदं चेति व्याधिद्वय वदन्ति, तन्नेच्छति गयदासाचार्यः, सख्यातिरेकात्, शर्करायाः पृथक्त्वेनोक्तेरदर्शनाच्च ॥ २५ ॥—२७ ॥—

**पामाविचर्च्यौ कुष्ठेषु रकसा च प्रकीर्तिता ॥ २८ ॥**

पामेत्यादि । कुष्ठेष्विति कुष्ठनिदाने इत्यर्थ ॥ २८ ॥

**परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ॥**
**पादयोः कुरुते दारीं सरुजां तलसंश्रिताम्[1] ॥ २९ ॥**

परीत्यादि । परिक्रमणशीलस्य सर्वतो भ्रमणस्वभावस्य । दारीमिति विपादिकाम ॥ २९ ॥

**शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ॥**
**मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम् ॥ ३० ॥**
**सकीलकठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा ॥**
**कोलमात्रः सरुक् स्रावी जायते कदरस्तु[2] सः ॥ ३१ ॥**

शर्करेत्यादि । शर्करा घटकर्परखण्डादय । ताभिरुन्मथिते पीडिते । कीलेन सदृशं सकीलमित्यव्ययीभावः, सकीलं चासौ कठिनश्च सकीलकठिन । हस्तयोरपीति भोज ॥ ३० ॥ ३१ ॥

**क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ ॥**
**दुष्टकर्दमसंस्पर्शादलसं[1] तं विनिर्दिशेत् ॥ ३२ ॥**

क्लिन्नमित्यादि । अयं कफेन सशोणितेन ॥ ३२ ॥

**रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥**
**प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ ३३ ॥**
**रुणद्धि रोमकूपांस्तु ततोऽन्येषामसंभवः ॥**
**तदिन्द्रलुप्तं[2] खालित्यं रुज्येति च विभाव्यते ॥ ३४ ॥**

रोमकूपानुगमित्यादि । खालित्यं पुंसामेव न तु योषिताम् । तथाच विदेह,—"अत्यन्तसुकुमाराङ्ग्यो रजो दुष्टं स्रवन्ति च । अव्यायामरता यस्मात्तस्मान्न खलितिः स्त्रियाः ॥ ३३ ॥ ॥ ३४ ॥

**दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते[3] ॥**
**कफवातप्रकोपेण विद्याद्दारुणकं तु तम् ॥ ३५ ॥**

दारुणेत्यादि । दारुणा कठिना, कण्डुरा कण्डूयुक्ता, प्रपाट्यते प्रकर्षेण पाट्यते । पित्तरुधिरयोरप्यनुबन्धो ज्ञेय, विदेहवचनात् । दारुणक 'पह्वा' इति लोके ॥ ३५ ॥

**अरूंषि वहुवक्त्राणि वहुक्लेदानि मूर्धनि ॥**
**कफासृक्कृमिकोपेन नृणां विद्यादरुंषिकाम्[4] ॥ ३६ ॥**

अरुंषीत्यादि । अरुंषि व्रणान् ॥ ३६ ॥

**क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ॥**
**पित्तं च केशान् पचति पलितं[5] तेन जायते ॥ ३७ ॥**

क्रोधेत्यादि । क्रोधादिकृतेन शरीरोष्मणा शिरोगतेन वैकृतपित्तेन पुन प्राकृतं पलितं, अन्यथा पित्तोष्मणोरभेदात् पुनरुक्तिदोषः स्यात्, पञ्जिकाकारस्तु शरीरोष्मा पावक, पित्तं तदाश्रय, एतौ पित्तपावकावेकीभूय केशान् पचतः; एतेन केवलोष्मकृतस्य विकृतस्यादोषजप्रसङ्गो निराकृत इति मन्यते ॥ ३७ ॥

**दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः ॥**
**गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः[6] ॥ ३८ ॥**

दाहेत्यादि । ताम्रत्वेन शोणितानुबन्धोऽप्येषा, तथाहि तन्त्रान्तर—'पित्तं शोणितसंसृष्टं यदा दूषयति त्वचम् । तदा करोति पिडका सर्वगात्रेषु देहिन ॥ मसूरमुद्गमाषाणा तुल्याः कोलोपमा अपि । मसूरिकास्तु विज्ञेया पिडका रक्तपित्तजा "—इति । एतासा 'शीतलिका' इति लोकाश्रया सज्ञा ॥ ३८ ॥

---

१ 'तलसंमाश्रित' इति पा० ।
२ कदररोग आङ्गलभाषाया 'कोर्न' (Corn) इति नाम्ना प्रसिद्ध ।

१ अलसकरोग आङ्गलभाषाया 'लीचेन्' (Lichen) इति नाम्ना प्रसिद्ध ।
२ इन्द्रलुप्त युनानीवैद्यके 'इन्तशार उल शअर' इति नाम्ना आङ्गलभाषाया च 'वॉल्डनेस' (Baldness) इति नाम्ना प्रसिद्धम् ।
३ 'प्रपुस्यते' इति 'प्रजायते' इति च पा० ।
४ 'प्रपुस्यते पुटपुटायते' इति पा० ।
५ पलित युनानीवैद्यके 'शेव' इति नाम्ना आङ्गलभाषाया च 'प्रिमेच्युअर ग्रे हेअर' (Premature grey hair) इति नाम्ना प्रसिद्धम् ।
६ मसूरिका युनानीवैद्यके 'जुदरी' इति नाम्ना आङ्गलभाषायां च 'सॉल पोक्स' (Small pox) इति नाम्ना प्रसिद्धा ।

शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः ॥
जायन्ते पिडका यूनां वक्त्रे या मुखदूषिकाः ॥ ३९ ॥

शाल्मलीत्यादि । शाल्मलीकण्टकप्रख्याः शाल्मलीकण्टकसदृशाः । यूना तरुणानाम् ॥ ३९ ॥

कण्टकैराचितं वृत्तं कण्डूमत् पाण्डुमण्डलम् ॥
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ ४० ॥

कण्टकैरित्यादि । पद्मिनीकण्टकप्रख्यैः पद्मिनीकण्टकसदृशैः । आचित व्याप्तं, तदाख्यं पद्मिनीकण्टकाख्यम् ॥ ४० ॥

नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम् ॥
सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः ॥ ४१ ॥

नीरुजमित्यादि । समं सूक्ष्मं, उत्सन्नमुन्नतं, सहजं जन्मबलप्रवृत्तं, श्लक्ष्णमकर्कशम् । जतुमणिः 'जदुल' इति लोकाश्रया तत्सञ्ज्ञा ॥ ४१ ॥

अवेदनं स्थिरं चैव यस्य गात्रेषु दृश्यते ॥
माषवत्कृष्णमुत्सन्नमनिलान्मष(श)कं वदेत् ॥४२॥

अवेदनमित्यादि । स्थिर कठिनम् ॥ ४२ ॥

कृष्णानि तिलमात्राणि नीरुजानि समानि च ॥
वातपित्तकफोच्छोषात्तान् विद्यात्तिलकालकान् ४३

कृष्णानीत्यादि । वातपित्तकफोच्छोषादिति वातपित्ताभ्या कफस्योच्छोषादित्यर्थः । अन्ये तु "वातपित्तासृगुच्छोषात्" इति पठन्ति, व्याख्यानयन्ति च-वातपित्ताभ्या रक्तस्य शोषादित्यर्थः; अत एव तिलकालके कार्ष्ण्यम् । 'वाताच्च कफोद्रेकात्' इति पाठ, तस्मिन् पाठे कफोद्रेकलक्षणं तिलकालके नास्ति ॥४३॥

मण्डलं महदल्पं वा श्यामं वा यदि वा सितम् ॥
सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥ ४४ ॥

मण्डलमित्यादि । सहजं जन्मबलप्रवृत्तम् । न्यच्छं लोका लाञ्छनमिति वदन्ति, पित्तरक्तान्वितो वायुरस्य कारणम् ॥४४॥

समुत्थाननिदानाभ्यां चर्मकीलं प्रकीर्तितम् ॥

समुत्थानेत्यादि । समुत्थानं संप्राप्ति, निदानं हेतुलक्षणनिर्देश । गयदासाचार्यस्तु समुत्थाननिदानाभ्यामित्यादि चर्मकीलप्रतिपादकं वाक्यमेव न पठति ॥—

क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ॥ ४५ ॥
सहसा मुखमागत्य मण्डलं विसृजत्यतः ॥
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ४६ ॥

क्रोधेत्यादि । व्यङ्गमेव स्थानान्तरेण वर्णान्तरेण च नीलिकेत्यन्ये ॥ ४५ ॥ ४६ ॥

मर्दनात् पीडनाच्चाति तथैवाप्यभिघाततः ॥
मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः ॥ ४७ ॥
तदा वातोपसृष्टं तु चर्म प्रतिनिवर्तते ॥
मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥ ४८ ॥
सवेदनः सदाहश्च पाकं च व्रजति क्वचित् ॥
मारुतागन्तुसंभूतां विद्यात्तां परिवर्तिकाम् ॥ ४९ ॥
सकण्डूः कठिना चापि सैव श्लेष्मसमुत्थिता ॥

मर्दनादित्यादि । अतीति मर्दनपीडनाभ्यां प्रत्येकं सबध्यते; सम्यक्कृतौ हि मर्दनपीडनौ वायुप्रशान्तिकरावेव भवतः । भजते आश्रयति । सर्वतश्चरो वायुर्व्यान । चर्म प्रतिनिवर्तत इति मणिं विहाय सर्वतो व्याघुटतीत्यर्थः । कोशश्चर्मकोश । सैव परिवर्तिकेत्यर्थ ॥ ४७—४९ ॥—

अल्पीयःखां यदा हर्षाद्बालां गच्छेत् स्त्रियं नरः॥५०॥
हस्ताभिघातादथवा चर्मण्युद्वर्तिते बलात् ॥
मर्दनात्पीडनाद्वाऽपि शुक्रवेगविघाततः ॥ ५१ ॥
यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥

अल्पीयःखामित्यादि । अल्पीय खामल्पतरयोनिद्वाराम् । चर्मण्युद्वर्तिते उत्तानीभूय व्याघुटिते । यस्य चर्म मर्दनादिभिरवपाट्यते विदीर्यते तस्य तामवपाटिका विद्यादित्यर्थः । चर्म तूद्वर्तते निश्चितमूर्ध्वं प्रवर्तत इत्यन्ये ॥ ५० ॥ ५१ ॥—

वातोपसृष्टमेवं तु चर्म संश्रयते मणिम् ॥ ५२ ॥
मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥
निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ॥ ५३ ॥
मूत्रं प्रवर्तते जन्तोर्मणिर्न च विदीर्यते ॥

१ 'युवानपिडका' इति माधवनिदाने पाठः ।

२ यौवनपिडका युनानीवैद्यके 'बशूर उल लवन' इति नाम्ना आङ्ग्लभाषायां च 'ॲक्नी' (Acne) इति नाम्ना प्रसिद्धा ।

३ पद्मिनीकण्टक—'पेपीलोमा ऑफ धी स्कीन (Papilloma of the skin) ।

४ 'च समुत्सन्न' इति पा० ।

५ मषकः युनानीवैद्यके 'शालील' इति नाम्ना आङ्ग्लभाषायां च 'मोल्स' (Moles) इति नाम्ना प्रसिद्ध ।

६ 'वातपित्तकफोद्रेकात्' इति पा० ।

७ 'तिलकालक' युनानीवैद्यके 'खाल' इति नाम्ना आङ्ग्लभाषाया च 'मेक्युली' (Macule) इति नाम्ना प्रसिद्धः ।

१ परिवर्तिका आङ्ग्लभाषाया 'पेराफायमॉसिस' (Paraphimosis) इति नाम्ना प्रसिद्धा ।

२ 'अल्पीयसी यदा हर्षाद्बलाद्गच्छेत्' इति पा० ।

३ अवपाटिका—'टेअर इन् दि प्रेप्यूस' (Tear in the Prepuce)

४ निरुद्धप्रकशरोग आङ्ग्लभाषाया 'फायमॉसिस' (Phimosis) इति नाम्ना प्रसिद्ध ।

५ 'मणिर्विव्रियते न च' इति पा० ।

निरुद्धप्रकशं विद्याद्रूढां चावपाटिकाम् ॥ ५४ ॥

वातोपसृष्टमित्यादि। एवमिति मर्दनपीडनाभिघातादिनेत्यर्थः। संश्रयते समग्रं श्रयते। दुरूढा चावपाटिकामिति अवपाटिकाऽपि दुरूढा निरुद्धप्रकशाख्या लभते ॥ ५२—५४ ॥

वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः ॥
निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च ॥ ५५ ॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ॥
संनिरुद्धगुदं व्याधिमेनं विद्यात् सुदुस्तरम् ॥ ५६ ॥

वेगसन्धारणादित्यादि। विहतो निरुद्धगतिः। महत्स्रोतो गुदम् ॥ ५५ ॥ ५६ ॥

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ॥
स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥५७॥
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते ॥
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम्[३] ॥ ५८ ॥

शकृदित्यादि। शकृन्मूत्रसमायुक्तेऽपाने गुदे, अधौते अक्रियमाणशौचे, शिशो रक्तकफोद्भवा कण्डूर्भवेदिति सम्बन्धः। कथंभूतस्य[?] स्विन्नस्य अस्नाप्यमानस्य च। एकीभूतमपानं व्रणैः सहेत्यध्याहार्यम्। अहिपूतनं कफरक्तजं ज्ञेयम् ॥ ५७॥५८ ॥

स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः ॥
प्रक्लिद्यते यदा स्वेदात् स कण्डूं जनयेत्तदा ॥ ५९ ॥
तत्र कण्डूयनात् क्षिप्रं स्फोटाः स्रावश्च जायते ॥
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ६० ॥

स्नानोत्सादनेत्यादि। उत्सादनमुद्वर्तनम् ॥ ५९ ॥ ६० ॥

प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः ॥
रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्[४] ॥ ६१ ॥

इति सुश्रुतसंहितायां निदानस्थाने क्षुद्ररोगनिदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

प्रवाहणेत्यादि। प्रवाहणं प्रकर्षेण निर्वाहणम्। अयं वातकोपजः ॥ ६१ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

---

१ 'सरुज वातसम्भवम्' इति पा०।

२ सनिरुद्धगुदरोग आङ्ग्लभाषाया 'स्ट्रिक्चर ऑफ दि रेक्टम' (Stricture of the rectum) इति नाम्ना प्रसिद्ध।

३ अहिपूतन युनानीवैद्यके 'हक उद मुकअद' इति नाम्ना आङ्ग्लभाषायां च 'प्रुरायटस एनाय' (Pruritus ani) इति नाम्ना प्रसिद्धम्।

४ गुदभ्रंश. युनानीवैद्यके 'खरुज उल मुकअद' इति नाम्ना आङ्ग्लभाषायां च 'प्रोलॅप्सस एनाय' (Prolapsus Ani) इति नाम्ना प्रसिद्ध.।

## चतुर्दशोऽध्यायः।

अथातः शूकदोषनिदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि। शूकदोषनिदानमिति अत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः; तेन शूकादिदोषनिदानमित्यर्थः। आदिशब्दाच्च दुष्टयोनिगूढान्तर्लोमयोनिदुर्भगागमनमभिघातश्चाभिप्रेत। तन्नेच्छति गयदासाचार्यः, दुष्टयोन्यादीनामुपदंशहेतुत्वात्। शूकः सजन्तुजलमलः, लिङ्गवृद्धिकरो योगो वा, दोषोऽत्र दुष्टिः, असम्यक्करणाद्विकृतम्, अथवा दोषो वातादिः, वातादिकृतो वा विकारः; तेषां लक्षणस्यैव निर्देशान्निदानं, न तु हेतोः; हेतुः पुनरत्र शूक एव, स च प्रतिज्ञासूत्रेणैवाभिहितः ॥१॥२॥

लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते। तद्यथा— सर्षपिका, अष्ठीलिका, ग्रथितं, कुम्भीका, अलजी, मृदितं, संमूढपिडका, अवमन्थः, पुष्करिका, स्पर्शहानिः, उत्तमा, शतपोनकः, त्वक्पाकः, शोणितार्बुदं, मांसार्बुदं, मांसपाकः, विद्रधिः, तिलकालकश्चेति ॥ ३ ॥

तेषां शूकदोषजानां व्याधीनां सामान्यां संप्राप्तिमाह,— लिङ्गेत्यादि। लिङ्गवृद्धिः स्थूलीकरणम्; आयामपरिणाहाभ्यामित्यन्ये[१]। वात्स्यायनाद्युक्तलिङ्गवृद्धियोगस्य अक्रमोऽनाचार; उत्तरवस्तिकर्मणोऽनाचार इत्यन्ये, तन्नेच्छति गयदासाचार्य। सङ्ख्येयनिर्देशादेव सङ्ख्याया लब्धायामष्टादशवचनं सङ्ख्येयनिर्देशभ्रान्तिनिरासार्थम् ॥ ३ ॥

गौरसर्षपतुल्या तु शूकदुर्भग्नहेतुका ॥
पिडका कफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः ॥ ४ ॥

शूकदुर्भग्नहेतुकेति दुरवचारितशूकहेतुकेत्यर्थः। अन्ये 'शूकदुर्भगहेतुका' इति पठन्ति, व्याख्यानयन्ति च—शूको दुष्टभगश्च हेतुर्यस्याः सा तथा। तन्नेच्छति गयदासाचार्यः ॥४॥

कठिना विषमैरन्तैर्मारुतस्य प्रकोपतः ॥
शूकैस्तु विषसंभुग्नैः[३] पिडकाऽष्ठीलिका भवेत् ॥ ५ ॥

कठिनेत्यादि। शूकैरष्ठीलिका भवेदिति सम्बन्धः। विषमैरप्रशस्तैः। अन्तैरिति कोऽर्थः, पतितैः। अन्ये तु विषमैरन्तैरुपलक्षितेति व्याचक्षते। एतेन विषमान्तसहितेत्युक्तम्। विषसंभुग्नैः विषेण कृत्वा वक्रैरित्यर्थः ॥ ५ ॥

---

१ 'आयामपरिणाहवृद्धिरित्यन्ये' इति पा०।

२ 'लिङ्गवृद्धिव्यतिरिक्तो' इति पा०।

३ 'विषसयुक्तै' इति पा०।

शूकैर्यत् पूरितं शश्वद्ग्रथितं तत् कफोत्थितम् ॥

शूकैरित्यादि । शश्वत् प्रतिदिनं, एतेनैकदिनान्तरपूरणं प्रशस्तमिच्छन्ति कामतन्त्राचार्याः; नित्यपूरणाद्ग्रथितनाम्नो रोगस्योत्पत्तिः ॥—

कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा ६
अलजीलक्षणैर्युक्तामलजीं च वितर्कयेत् ॥
मृदितं पीडितं यत्तु संरब्धं वायुकोपतः ॥ ७ ॥

कुम्भीकेत्यादि । कुम्भीका कुम्भीफलमिव । अशुभेति शुभा शुक्ला तद्विरोधेनाशुभा कृष्णेत्यर्थ । इयमपि दुरवचारितशूकजा । 'आशुजा'इति केचित्पठन्ति । तत्र शूकपातानन्तरं शीघ्रं जायत इत्यर्थः । अलजीलक्षणै प्रमेहपिडकालजीलक्षणैरित्यर्थः । इयमपि दुष्टशूकावचारणाज्ज्ञेया । यत्पुनर्लिङ्गं पातितशूकं सत् हस्ताभ्या भृशपीडितम्, अत एव वातकोपतः सरब्धं सशोफ, तन्मृदिताख्यरोगाक्रान्तं ज्ञेयम् ॥ ६ ॥ ७ ॥

पाणिभ्यां भृशसंमूढे संमूढपिडका भवेत् ॥

भृशसंमूढेऽत्यर्थपिच्चितावनते, 'पातितशूके लिङ्गे' इत्यध्याहार्यम् । समूढपिडका मृदितं च वातरक्तात् ॥—

दीर्घा बह्व्यश्च पिडका दीर्यन्ते मध्यतस्तु याः ॥ ८ ॥
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥

बह्व्यः प्रभूता । अवमन्थोऽपि स्थूलीकरणशूककर्मापचारेण ज्ञेयः ॥ ८ ॥—

पित्तशोणितसंभूता पिडका पिडकाचिता ॥ ९ ॥
पद्मपुष्करसंस्थाना ज्ञेया पुष्करिकेति सा ॥

पद्मपुष्करं पद्मकर्णिका । एषाऽपि शूककर्मापचारजा ज्ञेया ॥ ९ ॥—

जनयेत् स्पर्शहानिं तु शोणितं शूकदूषितम् ॥ १० ॥

जनयेदित्यादि । स्पर्शहानिं स्पर्शहानिनामानं व्याधिविशेपम् । शूकदूषितं शूकेन दुष्टिं नीतिम् ॥ १० ॥

मुद्गमाषोपमा रक्ता पिडका रक्तपित्तजा ॥
उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥ ११ ॥

मुद्गेत्यादि । उत्तमा व्याधिविशेषः । शूकाजीर्णनिमित्तजेति शूकाजीर्णं पुन. पुनर्दुरवचारितशूकविकृतिलक्षण एव(वा) परिणाम', तदेव निमित्त ततो जाता इति; अन्ये तु शूकाजीर्णं शूकेनाजीर्णं प्रतिक्षणपतितशूकनिमित्ताभ्यां रक्तपित्ताभ्या जायत इत्याहु' ॥ ११ ॥

छिद्रैरणुमुखैर्यस्तु चितं यस्य समन्ततः ॥
वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः ॥ १२ ॥

छिद्रैरित्यादि । छिद्रैर्दुरवचारितशूकनिमित्तवातशोणितजैः । वस्तु अधिष्ठानमित्यर्थ ॥ १२ ॥

पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान् ॥

पित्तरक्तेत्यादि । पित्तरक्तकृत इति दुरवचारितशूकजनितपित्तशोणितज इत्यर्थ. । गयदासाचार्यास्तु दुरवचारितशूकदूषितवातपित्तज इत्याहु ॥—

कृष्णैः स्फोटैः सरक्तैश्च पिडकाभिश्च पीडितम् ॥
यस्य वास्तु रुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥ १३ ॥

कृष्णैरित्यादि । यस्य वस्तु अधिष्ठानं स्फोटैः पिडकाभिश्च पीडितं भवति तत् शोणितार्बुदं ज्ञेयमिति सबन्धः । अयमपि दुरवचारितशूकेभ्यः ॥ १३ ॥

मांसदोषेण जानीयादर्बुदं मांससंभवम् ॥

मासेत्यादि । मांसदोषेण मांसवृद्ध्या । इदमपि दुरवचारितशूके लिङ्गे प्रहारादिभिर्जायते ॥—

शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः ॥ १४ ॥
विद्यात्तं मांसपाकं तु सर्वदोषकृतं भिषक् ॥

शीर्यन्ते गलन्ति । एषोऽपि दुरवचारितशूकदूषितदोषजः ॥ १४ ॥—

विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥ १५ ॥

विद्रधिमित्यादि । अयमपि दुरवचारितशूकदूषितदोषत्रयजः ॥ १५ ॥

कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ॥
पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ १६ ॥
कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः ॥
सन्निपातसमुत्थानं तं विद्यात्तिलकालकम् ॥ १७ ॥

कृष्णानीत्यादि ।—कृष्णानि कृष्णवर्णानि । चित्राणि शुक्लपीतनीलादिवर्णानीत्यर्थः । कालानि परिणततिलफलवर्णानि । शीर्यन्ते गलन्ति ॥ १६ ॥ १७ ॥

तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः ॥
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ १८ ॥

इति सुश्रुतसंहितायां निदानस्थाने शूकदोषनिदानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

शूकदोषजानामसाध्यान् निर्दिशन्नाह,—तत्रेत्यादि । ये चेति चकारात्कदाचित्सिध्यन्तीत्युक्तम् ॥ १८ ॥

इति श्रीडल्हणविरचितायां निबन्धसङ्ग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने चतुर्दशोऽध्यायः ॥ १४ ॥

---

१ 'छिद्रैरणुमुखैर्लिङ्गं' इति 'छिद्रैरणुमुखैर्यच्च चितं मेढ्रं' इति च पा० ।

१ 'वातपित्तकृतः' इति पा० ।
२ 'दूषितम्' इति पा० ।
३ 'वस्तिरुजश्चोग्रा' इति पा० ।

